ANNAMALAI UNIVERSITY SANSKRIT SERIES 10

# VYUTPATTIVĀDA—LAKĀRĀRTHAVICĀRA

*of*

Mahāmahōpādhyāya
GADĀDHARA BHAṬṬĀCĀRYA

WITH

# VIVARAṆA

*of*

Paṇḍitarāja V. SUBRAHMANYA SASTRI,
*Lecturer in Sanskrit, Annamalai University*

AND

WITH

A FOREWORD BY

His Highness RAMAVARMA PAREEKSHIT,
*The Maharaja of Cochin*

AND

A PREFACE BY

DR. P. S. SUBRAHMANYA SASTRI, M. A., Ph. D.




PUBLISHED BY
THE ANNAMALAI UNIVERSITY, ANNAMALAINAGAR
1948

अण्णामलैविश्वविद्यालयसंस्कृतग्रन्थमाला अङ्कः १०

महामहोपाध्यायश्रीमद्गदाधरभट्टाचार्यविरचितः

# व्युत्पत्तिवादः - लकारार्थविचारः

पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा

विरचितेन

विवरणेन संवलितः




अण्णामलैविश्वविद्यालयः, अण्णामलैनगरम्

1948

# भूमिका

सर्वेऽपि स्वाभिमतमर्थं परान्बोधयितुं शब्दान् प्रयुञ्जते । तेभ्यो जायमानं अभिमततत्तत्पदार्थसंसर्गावगाहिनं बोधं वाक्यार्थबोधं संप्रचक्षते विद्वांसः । तत्तत्पदार्थान्वयनिरूपणपूर्वकं वाक्यार्थबोधवर्णने सर्वानपि दार्शनिकानतिशेरते नव्यनैयायिकाः । वाक्यार्थबोधनिरूपकेषु नव्यनैयायिकप्रबन्धेषु, विषयविचारपद्धत्या विदुषां हृदयंगमया शाब्दबोधवर्णनसरण्या च व्युत्पत्तिमादधानोऽयं यथार्थनामा श्रीमद्गदाधरभट्टाचार्यविरचितो व्युत्पत्तिवादः प्रथमं पदमधिरूढो विलसति ।

अभेदान्वयबोधः भेदान्वयबोधश्चेति द्विविधेऽपि शाब्दबोधे आकाङ्क्षाविशेषज्ञानाना कारणतां प्रतिपादयन्तः श्रीमद्गदाधरभट्टाचार्याः प्रथमतः अभेदान्वयबोधविचारं समाप्य, प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन समं भेदान्वयबोधमुपक्षिप्य, सुबर्थविचारमुखेन प्रातिपदिकार्थप्रत्ययार्थयोः भेदान्वयबोधं विस्तरेण निरूप्य, धात्वर्थप्रत्ययार्थयोः भेदान्वयबोधं निरूपयितुं अन्ते ग्रन्थेऽस्मिन् धातुप्रकृतिकलकारार्थविचारं घटयामासुः ।

सोऽयं लकारार्थविचारः व्याख्यानवैरल्यात् भावाधिगमे कामपि सरलां विवृतिमपेक्षते । विद्यार्थिनां सुखावबोधाय स्वमतिशुद्धये च लकारार्थविचारविवरणमतानिषं यत्र नव्यवैयाकरणमीमांसकानां दूषणप्रकाराः समालोचिता वर्तन्ते बालव्यामोहशमनाय आदर्शोऽपि विमृष्टः । आदर्शकाराणामभिप्रायवर्णनावसरे मुद्रितादर्शपुस्तकपत्रसंख्यापि योजिता । अधोभागे निर्दिष्टानि पाठान्तराणि ।

बच्चा झा इति नाम्ना विख्यातैः श्रीधर्मदत्तसूरिभिर्विरचितगूढार्थतत्त्वालोकेन सह मुद्रितव्युत्पत्तिवादपुस्तकपाठः 'ब' इति, श्रीकृष्णशास्त्रिपरिशोधितमुद्रितमूलपुस्तकपाठः 'कृ' इति, काञ्चीपुरे मुद्रितमूलपुस्तकपाठः 'का' इति, मुद्रितादर्शसहितमूलपुस्तकपाठः 'आ' इति च संकेतितः ।

गुणपक्षपातिनः पण्डितप्रकाण्डाः दूरीकृत्य दोषजातं गुणलेशमनुमोदमानाः मदीयं श्रमं सफलयन्त्विति अभ्यर्थये ।

विवरणपरिशीलनेन आमुख (Foreword) लेखनेन च जनमिमं धन्यमापादितवतां विदितवेदितव्यानां प्रतिभाप्रसरविस्मापितनिखिलान्तर्वाणिकुलानां महामहिममहोन्नतश्रीरामवर्मपरीक्षिन्महाराजानां (His Highness Rama Varma Pareekshit, Maharaja of Cochin) धन्यवादनिवेदनातिरिक्तं किमपि कर्तुमजानानः हार्दान् धन्यवादान् समर्पयामि ।

विमर्शकधुरन्धराणा ग्रन्थस्यास्य प्रकाशने बद्धादराणां उपोद्धातलेखनेन जनमिमं महीकृतवतां अण्णामलैविश्वविद्यालये संस्कृतविभागाध्यक्ष्यमलंकृतवता डाक्टर् पि· एस्. सुब्रह्मण्यशास्त्रिमहोदयानां (Dr. P. S. Subrahmanya Sastri, M. A., Ph. D.) नमोवाकान् प्रतिपादयामि ।

जाग्रत्यपि मुद्रणोपकरणदौर्लभ्ये ग्रन्थस्यास्य प्रकाशनेन बहूपकृतवता अण्णामलैविश्वविद्यालयाधिकृतानां भृशमधमर्णोऽस्मि ।

समीचीनया नव्यपद्धत्या ग्रन्थमिमं मुद्रापितवतां (The Trichinopoly United Printers Ltd.) मुद्रणशालाधिकृतानां मदीयां कृतज्ञतां निवेदयामि ।

विदुषामनुचरः
**पण्डितराजः वि· सुब्रह्मण्यशास्त्री**
न्यायाध्यापकः
**अण्णामलैविश्वविद्यालयः**

अण्णामलैनगरम्
21—8—48

# FOREWORD

BY

HIS HIGHNESS

RAMAVARMA PAREEKSHIT

*Maharaja of Cochin*

---

GADĀDHARA Bhaṭṭāchārya's "Vyutpattivāda", ever since its appearance in the vast firmament of Nyāya Literature, has shone and is still shining with an unmatched brilliance. The works of his predecessors dealing with the same subject, though of undoubted merit, lost their position somewhat in the estimation of the savants and students. The latter began to pay greater attention to this new work. Modern universities also rightly made it a text-book for the higher courses of studies in Nyāya.

Such a great work, one may expect, will produce a number of commentaries. Scholars of repute commenced writing them; but for one reason or the other, many gave up the attempt after covering only a portion of the text. Even "Gūḍārtha-tattvālōka" of Dharmadatta Sūri, very elaborate in the earlier portion, dwindles almost to nothing when it approaches towards the end. The teachers and the taught, inside as well as outside the universities, have been keenly feeling the want of good explanatory notes for the latter part of this, one of the most widely-read works of Bhaṭṭāchārya.

This need has to a great extent been now met by Panditarāja V. Subrahmaṇya Śāstri, Senior Nyāya Lecturer in Annamalai University. Mr. Śāstri is an

erudite scholar and unlike many such, is still a student as well. For years he has been teaching Gadādhara's works in the Śirōmaṇi classes. This experience naturally has proved of immense help to him in writing this commentary, "Vivaraṇa" dealing with the last portion of "Vyutpattivāda", namely "Lakārārtha-vichāra"—discussion regarding the meaning or meanings of all the tenses in Sanskrit.

Mr. Śāstri's style is straight and lucid and never produces confusion in the readers' mind by the use of unnecessary verbiage. Some commentators fall into the error of trying to explain the readings that they meet with in certain text-books. Such explanations may be clever and ingenious, but are not likely to satisfy the intelligent reader. It is gratifying to see that Mr. Śāstri has quite properly taken pains to ascertain the correct readings before explaining them.

Another point to be noted is that Mr. Śāstri has described in appropriate places the view-points of the opponents such as Śābdikās and Bhāṭṭās and then refuted them with proper arguments. This will clearly help the readers to widen their knowledge of the subject.

The task which the author has attempted is certainly one of great difficulty. That he has achieved it so well reflects no small credit on him. I heartily congratulate him on what in my opinion is a great success.

The thanks of the reading public are due also to the Annamalai University for bringing out a valuable work of this sort.

Ramavarma Pareekshit

*Maharajah of Cochin.*

# PREFACE

BY

Vidyāratna

DR. P. S. SUBRAHMANYA SASTRI, M. A., Ph. D.

*Professor of Sanskrit (Retired)*

*Annamalai University*

---

IT gives me great pleasure that Sri Paṇḍitarāja V. Subrahmanya Sastriar, Chief Lecturer in Nyāya of the Sanskrit Department of the Annamalai University, has made good use of his critical study of, and wide experience in lecturing on, the Vyutpattivāda of Gadādhara Bhaṭṭācārya, an advanced work on Nyāya Dialectics, in bringing out this lucid commentary--Vivaraṇa on the chapter which deals with the meaning of tenses. Since other commentaries are meagre on this portion, this is a thing which was devoutly wished for. He has explained in many a place how the commentary Ādarśa does not meet the heart of Bhaṭṭācārya. The greatness of this work is enhanced by the fact that this is the first fruit of my persuading Sanskrit Sastric scholars for the last fifteen years to put in writing the results of their labours in lecturing on Śāstras. The manuscripts of this book were prepared and sent to the press when I was the Head of the Department of Sanskrit in the Annamalai University. I wish this commentary will best be used by scholars in Nyāya. May the author continue his research work and the University publish many more works of this nature !

Tiruvadi, 15—8—1948 } P. S. Subrahmanya Sastri

V—B

॥ श्रीगुरुभ्यो नमः ॥

## विवरणोपेतस्य व्युत्पत्तिवादलकारार्थविचारस्य

## विषयानुक्रमणिका ॥

| विषयः | पत्रसंख्या |
| --- | --- |

| विषयः | पत्रसंख्या |
|---|---|
| करोतीत्यत्र एकधैव कृतेर्बोधः विभक्तिः साधुत्वार्था तत्तद्व्युत्पत्तिविरोधपरिहारेण, करोति चैत्रः इत्यादौ धात्वर्थकृतिप्रकारकचैत्र-विशेष्यकबोधवर्णनम् .. .. | 43— 45 |
| करोति, जानातीत्यादौ आख्यातस्याश्रयत्वमर्थः इति दीधितिकृन्मतसमर्थनम् .. .. | 45— 52 |
| मणिकारमते गौरवप्रदर्शनम् .. .. | 46 |
| दुरपह्नवानुभवबलेन आख्यातस्याश्रयत्वार्थकत्व-साधनम् .. .. .. | 47— 49 |
| जानाति चैत्रः इत्यत्र परस्मैपदस्य, श्नादिविकरणस्य च साधुतानिर्वाहाय आख्यातस्य कर्तृत्वार्थ-कत्वमिति परेषां युक्त्युपन्यासः, तन्निरासश्च .. | 49— 50 |
| जानञ्जानातीत्यस्य निराकांक्षत्वनिर्वाहाय लका-रस्य आश्रयत्वार्थकत्वस्वीकारः .. | 51— 52 |
| नश्यतीत्यत्राख्यातस्य प्रतियोगितार्थकत्वमावश्यकम् | 52 |
| आख्यातस्य कर्तृत्वशक्ततावच्छेदकविचारः .. | 53 — 58 |
| कर्तृत्वशक्ततावच्छेदकं तिङ्त्वं न भवतीत्याक्षेपः .. | 53 — 54 |
| तिबादिस्थानिनो लस्य लत्वेन कृतिशक्तता, तिबादिना स्थानिनो लस्य स्मरणात् कर्तृत्वो-पस्थितिः इति प्राचीननैयायिकमतनिरूपणम् | 54— 56 |
| तन्मतनिराकरणम्, श्रूयमाणतिबाद्यानुपूर्वीणामेव कर्तृत्वशक्ततावच्छेदकत्वनिरूपणम् .. | 57— 58 |
| कर्मत्वशक्ततावच्छेदकनिरूपणपूर्वकं आख्यात-विशेषस्य कर्मत्वे शक्तिप्रतिपादनम् .. | 59 —60 |
| चैत्रेण त्यज्यते, गम्यते ग्रामः इति वाक्यस्य तत्तत्पदार्थान्वयप्रदर्शनपूर्वकं शाब्दबोध-वर्णनम् .. .. .. | 60 —61 |

| विषयः | पत्रसंख्या |
| --- | --- |

| विषयः | पत्रसंख्या |
| --- | --- |

| विषयः | पत्रसंख्या |
| --- | --- |

विषयः पत्रसंख्या

| विषयः | पत्रसंख्या |
| --- | --- |

# उद्धृतानां अनुशासनानां सूची

ॐ

॥ श्रीगुरुभ्यो नमः ॥

# श्रीमद्गदाधरभट्टाचार्यकृतः

# ॥ व्युत्पत्तिवादः — लकारार्थविचारः ॥

( सुब्रह्मण्यशास्त्रिकृतविवरणोपेतः )

---

**धातुप्रकृतिकाश्च लकारकृत्सन्यङ्णिच्प्रभृतयः प्रत्ययाः**

## विवरणम्

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥ १

पापं वारयते परं घटयते कालं पराकुर्वते
मोहं दूरयते मदं शमयते मत्तासुरान् हिंसते ।
मारं मारयते महामुनिगणानानन्दिनः कुर्वते
पार्वत्या सहिताय सर्वनिधये शर्वाय तुभ्यं नमः ॥ २

भट्टाचार्यकृतिः क्वेयं क्व चेयं मामकी मतिः ।
अथापि चित्सभानेतुः करुणापूरपूरितम् ॥ ३

कटाक्षपातमालम्ब्य चापलादेव केवलम् ।
लकारार्थविचारं तं विवरीतुं समारभे ॥ ४

**केचिद्धात्वर्थान्वितं स्वार्थं[1] ब्रुवते । अर्थान्तरमनभिदधानाश्च केचिदाकांक्षानिर्वाहकतया प्रकृतिभिः स्वीयार्थबोधन एवोपकुर्वते । तत्र लडादिदशलकाराणां 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रेण कर्तृकर्मभावेष्वनुशिष्टानां कर्तृत्वसामान्यमर्थः । तावन्मात्राभिधानेनैव प्रथमान्तपदोपस्थाप्ये विशेषणतया तदन्वयेन कृतिविशिष्टस्य कर्तुर्बोधनिर्वाहात् । लकारस्य तद्बोधकतया न लः कर्मणीति सूत्रविरोधः । बोधकताया एव तत्र सप्तम्यर्थत्वात् न वाचकतायाः**

भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते इति पूर्वमुक्तम् । एतावता प्रबन्धेन प्रातिपदिकार्थप्रत्ययार्थयोः भेदान्वयबोधमुपपाद्य, धात्वर्थप्रत्ययार्थयोः भेदान्वयबोधं निरूपयितुमुपक्रमते **धातुप्रकृतिकाश्चेति ॥**

**स्वार्थमिति**— लकारस्य कर्तृत्वं कर्मत्वञ्च, कृतः कर्ता कर्म च, सनः धात्वर्थविषयकेच्छा, यङः पौनःपुन्यं, णिचः कर्तृत्वनिर्वाहकव्यापारश्चार्थः ।

**अर्थान्तरमनभिदधानाश्च केचिदिति** — भावे तिङ्, भावे कृत्, शबादिविकरणानि, चौरादिकधातूत्तरणिच्, जुगुप्सते इत्यादौ सन् इत्येवमादय इत्यर्थः ।

**कर्तृत्वसामान्यमिति**—मुख्यभाक्तसाधारणमित्यर्थः । लः कर्मणीति सूत्रे कर्तरि कृत् इति सूत्रात् कर्तरीत्यनुवृत्तेः लकारसामान्यस्य कर्तृत्वमर्थः । कर्माख्यातस्य कर्तृत्ववाचकत्वेऽपि ततो न कर्तृत्वबोधः इति स्फुटीभविष्यति ।

ननु कर्तृत्वस्य लकारवाच्यत्वे तेन कर्तुरबोधनात् लः कर्मणीति सूत्रविरोधः; अतः कर्तैव लकारार्थो वाच्यः इत्यत आह— **तावन्मात्राभिधानेनैवेति ।**

1. अधिकमर्थं (का), धात्वर्थान्वितसाधकतमत्वं (कृ), अधिकं स्वार्थं (ब) ।

**गौरवेण विशिष्टधर्मिणि शक्तेर्बाधात् ।**

**शक्तेर्बाधादिति** — कृतिविशिष्टे लकारशक्तौ अनन्तानां कृतिव्यक्तीनां शक्यतावच्छेदकत्वकल्पनया गौरवम् । कृतौ शक्तिस्वीकारे तु अखण्डकृतित्वजातेरेकस्या एव शक्यतावच्छेदकत्वमिति लाघवम् । लाघवसहकृतस्यैवानुशासनस्य शक्तिग्राहकत्वमिति भावः ।

न च वैयाकरणनये नाख्यातस्य कृतिविशिष्टे शक्तिः, तन्मते कृतिपर्यन्तव्यापारस्य धात्वर्थत्वेन धातोरेव कृतेर्लाभात् अनन्यलभ्यस्यैव शब्दार्थत्वात्, अपि तु आश्रयमात्रे । शक्यतावच्छेदकञ्चाश्रयत्वमखण्डमिति न तन्मते गौरवमिति वाच्यम् । आश्रयत्वस्यापि तत्तदाश्रयस्वरूपस्याननुगतत्वात् ॥ न चाश्रयपदशक्यतावच्छेदकतया आश्रयत्वमखण्डं द्रव्यत्वादिवत् सिद्ध्यतीति वाच्यम्, विभुपदशक्यतावच्छेदकस्यापि विभुत्वस्य सखण्डत्वेन, शक्यतावच्छेदकत्वस्य अखण्डत्वासाधकत्वात् । आश्रयत्वस्याखण्डत्वेऽपि तस्य नियतान्यनिरूपितस्वरूपत्वात् निरूपकभेदेन, तत्तदवच्छेदकसंबन्धभेदेन च भिन्नत्वमेवेत्यननुगम एवेति अनन्तानां शक्यतावच्छेदकत्वकल्पनागौरवं दुर्वारमेव ॥ न चैवं लाघवादरे कर्तरि विहितकृत्प्रत्ययस्यापि कृतिवाचकत्वमेवास्तु इति वाच्यम् । नामार्थयोर्भेदेनानन्वयव्युत्पत्तेः चैत्रः पक्ता इत्यादौ चैत्रे पक्तुरभेदान्वयनिर्वाहाय कृतः कर्तृवाचकत्वावश्यकत्वात् । न च कृत्प्रत्ययस्य नामत्वाभावात् तदर्थस्य कृतेः पचधात्वर्थान्वितायाः चैत्रनामार्थे आश्रयत्वरूपभेदसंबन्धेनान्वये न व्युत्पत्तिविरोधः इति वाच्यम् । तथापि **चैत्रः पक्ता, मित्रा पक्त्री** इत्यादौ समानवचनकत्वसमानलिङ्गकत्वयोरुपपत्तये सामानाधिकरण्यस्यावश्यं स्वीकरणीयतया अभेदान्वयबोधस्यावश्यकत्वात्.॥ न च **गावो धनं, वेदाः प्रमाणं** इत्यादौ सामानाधिकरण्येऽपि असमानलिङ्गकत्वं दृश्यते, तद्वत् सामानाधिकरण्याभावेऽपि समानलिङ्गकत्वमस्तु

लिङ्गस्य लोकाश्रयत्वादिति वाच्यम् । चैत्रः पक्ता इत्यादौ समानलिङ्गकत्व-प्रयोजकतया सामानाधिकरण्यमुपपाद्यते धूमप्रयोजकतया वह्निरिव । समानाधिकरणानां समानलिङ्गकत्वमिति नियमस्य हि व्यभिचारभूमिः वेदाः प्रमाणमित्यादिः । समानलिङ्गकपरस्परान्वितार्थकपदयोः सामानाधिकरण्या-भावः न कुत्रापि दर्शयितुं शक्यः इति व्याप्येन समानलिङ्गवचनत्वेन व्यापकस्य सामानाधिकरण्यस्योपपादने न किमपि बाधकम् । अपि च विशेष्यवाचकपदाध्याहारं विनैव पक्तारमानयेत्यादौ कृतिविशिष्टे आनयन-कर्मत्वान्वयबोधस्य, **भोक्ता** तृप्यति इत्यादौ कृतिविशिष्टे तृप्त्याश्रयत्व-बोधस्य च सर्वानुभवसिद्धस्य निर्वाहाय कृतिविशिष्टवाचकत्वमेव कृत्प्रत्ययस्य युक्तम् । न च चैत्रः पक्ता इत्यत्रेव चैत्रः पचतीत्यत्राभेदान्वयबोधोऽनुभूयते । प्रथमान्तार्थे धात्वर्थानुकूलकृतेः भेदान्वयबोधस्यैव सर्वनैयायिका-नुभवसिद्धत्वात् । अतश्च नाभेदान्वयानुरोधादाख्यातस्य कर्तरि शक्तिः सिद्ध्यति ॥

**पाचकः** इति कृदन्तमपि पचति यः इति विवियते । आख्यातार्थस्य प्रथमान्तार्थे अन्वयेन ततः पाककृतिविशिष्टबोधः इति विवरणविव्रियमाणयो-रेकार्थबोधकत्वमुपपद्यते । कृतिशक्तस्याप्याख्यातस्य गच्छतीत्यादौ आश्रयत्वे निरूढलक्षणा ॥ न च न विभक्तौ लक्षणेति प्रवादविरोधः व्यत्ययानुशासन-वैयर्थ्यश्चेति वाच्यम् । अनुशासनं विना एकस्या विभक्तेः अपरविभक्त्यर्थे न लक्षणा इत्यस्यैव तदर्थतायाः प्रागुक्तत्वात् व्यत्ययानुशासनवैयर्थ्यापादना-संभवाच्च ॥

न च कर्तुराख्यातवाच्यत्वे आख्यातार्थसंख्यायाः तदर्थे एव कर्तर्यन्वयः इति विशेष्यतासंबन्धेन आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति आख्यातजन्यकर्त्रुपस्थितिः विशेष्यतया हेतुरिति कार्यकारणभावः । कृतेराख्यातवाच्यत्वे तु आख्यातार्थसंख्यायाः इतराविशेषणीभूतप्रथमान्तार्थे एवान्वयस्य वक्तव्यतया, विशेष्यतया आख्यातार्थसंख्याप्रकारकशाब्दबोधे

विशेष्यतया इतराविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः हेतुरिति कार्य-कारणभावः फलित इति गौरवमिति वाच्यम् । एकपदोपस्थापितयोः विशेषणविशेष्यभावेनान्वयबोधः न स्वरससिद्धः, हरिपदादुपस्थितयोः अश्वसूर्ययोः आधाराधेयभावेनान्वयबोधस्यानुभवविरुद्धत्वात् । क्वचित्तु व्युत्पत्तिवैचित्र्यादेकपदोपस्थापितयोरन्वयः स्वीक्रियते इत्याख्यातार्थद्वित्वादि-संख्यायाः प्रथमान्तार्थे अन्वय एव समञ्जसः । अपि च निरुक्तलाघवेना-ख्यातस्य धर्मवाचकत्वे सिद्धे एतादृशगुरुधर्मावच्छिन्नकारणताकल्पनागौरवं फलमुखत्वान्न दोषः, निषादस्थपतिशब्दस्य लाघवेन कर्मधारयत्वे सिद्धे निषादस्य यागोपयुक्तवेदाध्ययनकल्पनागौरवमिव ॥

न च यत्र विना प्रथमान्तपदं पचतीत्येतावन्मात्रं प्रयुक्तं तत्र कीदृग्विध इति धर्मविशेषप्रश्नो दृश्यते, धर्मिज्ञानं विना न तद्गतधर्म-विशेषप्रश्नो युज्यते, आख्यातस्य कृतिवाचकत्वे तद्वाक्यात् 'पाकानुकूला कृतिरित्येव बोधो जायेत, न हि तत्र धर्मी भासते, अतस्तत्र धर्मिभानाय कृतिशक्तस्यापि लकारस्य कर्तरि निरूढलक्षणा स्वीकार्या, इत्थञ्च लः कर्मणीति सूत्रं स्वरसतः संगच्छते इति वाच्यम् । पाकानुकूलकृतेः शाब्दबोधे जाते तदाश्रयस्य कर्तुः मानसबोधसंभवेन तद्गतधर्मविशेषप्रश्नासंगत्यभावात् । न च कर्तुरशाब्दत्वे तत्र आख्यातार्थ-संख्याया अन्वयासंभवेन, पचतीति वाक्यजन्यबोधानन्तरं पाककर्ता एको न वेति संशयप्रसङ्ग इति वाच्यम् । अनेकः पचतीत्यपि प्रयोगदर्शनात् पचतीत्येतावन्मात्रजन्यबोधानन्तरमपि पाककर्ता एको न वेति संशयः इष्ट एव । यदि च स संशयो नानुभूयते इत्युच्यते, तदा प्रथमान्तपदा-समभिव्याहारे आख्यातार्थसंख्यायाः सामानाधिकरण्यसंबन्धेन तदर्थकृता-वन्वयः स्वीक्रियते । एवञ्च संसर्गघटकतया कृत्याश्रये एकत्वभानात् न तद्बोधानन्तरं पाककर्ता एको न वेति संशय इति बोध्यम् । यदि च निरुक्तशाब्दबोधस्य पाककृत्याश्रयविशेष्यकैकत्वप्रकारकत्वाभावान्न तादृश-संशयनिवर्तकत्वमिति मन्यते । तदा तादृशशाब्दबोधसमनन्तरजातः

**चैत्रः पचतीत्यादौ लकारे प्रथमान्तपदसामानाधिकरण्यप्रवादस्या-**

कृत्याश्रयविशेष्यकैकत्वप्रकारकमानसबोधः तादृशसंशयं निवर्तयतीति मन्तव्यम्। न च तथापि क्षणविलम्बः स्यादिति वाच्यम्। कृतिशक्तस्याख्यातस्य कर्तरि निरूढलक्षणामभ्युपगच्छतां मीमांसकानां मतेऽपि निरुक्तसंशयनिवृत्तये क्षणविलम्बस्यावश्यकत्वात्। तन्मते हि पचतीति वाक्यान्न पाककर्ता एकः इति शाब्दबोधो जायते, आख्यातार्थकर्तुः तदर्थसंख्यायाश्च भावनाया-मेवान्वयस्वीकारात् पार्ष्टिकबोधेनैव निरुक्तसंशयनिवृत्तेः वक्तव्यत्वात्। एवं पाकानुकूलकृतेर्बोधानन्तरं तद्विशिष्टस्य मनसा गृहीतुं शक्यत्वात् पाककर्ता चैत्रो वा मैत्रो वेति संशयोऽप्युपपद्यते। यदि च लः कर्मणीति अनुशासनस्वरसेन कर्तरि निरूढलक्षणा स्वीक्रियते, तदा तदनुरोधेन कर्तरि शक्तिस्वीकार एव युक्ततमः स्यात्। वस्तुतस्तु सूत्रस्थसप्तम्याः बोधकत्वा-र्थकत्वेन कर्तृपदस्य धर्मपरत्वाभावात् अस्मन्मते सूत्रस्वरसः उपपादित एव॥ न च प्रथमान्तपदासमभिव्याहारे कर्तृबोधकत्वस्याख्याते विरहात् असङ्गतिरिति वाच्यम्। तत्रापि संख्याकृत्योः संसर्गघटकतया तद्भानस्यो-पपादितत्वात्। किञ्च यत्र सहकार्यन्तरविरहेण कर्तुर्बोधो न जनितः तत्साधारण्याय कर्तृबोधस्वरूपयोग्यत्वरूपबोधकतायाः सप्तम्यर्थत्वस्वीकारेण सर्वसामञ्जस्यम्॥ तस्मात् कर्तरि निरूढलक्षणा नावश्यकीति कृतिरेवा-ख्यातार्थः इति सिद्धम्॥

नन्वेवं लकारे प्रथमान्तपदसामानाधिकरण्यप्रवादस्य का उपपत्तिः, अभेदेन प्रथमान्तार्थान्वयिनः कर्तुराख्यातार्थत्वे एव तदुपपत्तेरित्यत आह—

**चैत्र इत्यादि।**

**भेदेन तदर्थान्वितस्वार्थबोधपरत्वाभावेऽपि कथञ्चिदुपपादनसंभवात् ।**

**तृतीयायाः साधुतानियामकं लकारादिना कर्तुरनभिधानमपि कर्तृत्वविशिष्टाबोधनमेव न तु विशिष्टशक्त्या [2] विशिष्टाबोधनपर्यन्तम् । अतो विशिष्टस्य लकारवाच्यत्वेऽपि चैत्रः पचतीत्यादौ न तृतीयापत्तिः, अन्वयबलेन विशिष्टबोधात् । चैत्रः पक्ता इत्यादौ कृत्प्रत्ययस्य धर्मिणि शक्तावपि न क्षतिः, शक्त्यधीनविशिष्टबोधसाधारणबोधस्यैवानभिधानपदार्थप्रतियोगित्वात् ।**

**कथञ्चिदिति ॥** प्रातिपदिकार्थनिष्ठविशेष्यतानिरूपितकर्तृत्वप्रकारताप्रयोजकत्वात् लकारस्य प्रथमान्तपदसामानाधिकरण्यं व्यवह्रियते । एतादृशसामानाधिकरण्याभिप्रायकाण्येव 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' 'तिङ्समानाधिकरणे प्रथमा' इत्याद्यनुशासनानीति भावः ।

ननु कर्तुराख्यातावाच्यत्वे चैत्रः पचतीत्यत्र चैत्रपदोत्तरं तृतीया स्यात् आख्यातेन कर्तृत्वविशिष्टस्याबोधनादित्यत आह— **तृतीयाया इति ॥**

**अनभिधानपदार्थप्रतियोगित्वादिति ॥** एवञ्च यत्रान्वयबलात्कर्तृत्वविशिष्टबोधः, यत्र वा शक्त्यैव कर्तृत्वविशिष्टबोधः, तत्रोभयत्रानभिधानाभावान्न तृतीयेति फलितम् ।

2. अबोधनपर्यन्तम् (क. - ब.)

**[3] अथानभिहिते कर्तरि तृतीया इत्यनुशासनेऽपि सप्तम्यर्थो बोधकत्वमेव। तथा च चैत्रेण पच्यते इत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानान्न कर्तृत्वविशिष्टधर्मिबोधकत्वमिति सूत्रार्थविरोधः।**

प्रथमाविभक्त्यर्थविचारे निष्कर्षितमपि अनभिहिते कर्तरि तृतीया इति सूत्रार्थे अधिकविवक्षया पुनः विचारयितुमुपक्रमते **अथानभिहिते** इत्यादिना॥ अत्र "अनभिहिते कर्तरीत्यत्र कर्तृपदं कर्तृत्वविशिष्टधर्मिपरमेव। चैत्रेण पच्यते इत्यत्र तृतीयार्थभूतकर्तृत्वस्य प्रकृत्यर्थभूतचैत्रविशेष्यतयैव भानं भवति। चैत्रवृत्तिकृतिजन्यविक्लित्त्यनुकूलव्यापारः इति बोधोदयादिति लकारस्यात्र कर्तृत्वविशिष्टधर्मिबोधकत्वाभावाच्चैत्रपदात्तृतीया प्राप्तेति अनभिहिते इति सूत्रविरोधोऽपि नास्ति। सूत्रेण लकारस्य कर्तृत्वविशिष्टधर्म्यबोधकत्वे एव कर्तृवाचकपदात्तृतीयाविधानादित्यर्थः" (५१९०-पृ.) इत्यादर्शग्रन्थः, "'अनभिहिते कर्तरि तृतीया' इत्यनुशासनेऽपि सप्तम्यर्थो बोधकत्वमेव। तथा च चैत्रेण पच्यते इत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानान्न कर्तृत्वविशिष्टधर्मिबोधकत्वमिति सूत्राविरोधः" इति मूलपाठमवलम्ब्य प्रवृत्तोऽस्ति। अत्र लकारेण कर्तृत्वस्यैवाबोधनात् अन्वयबलेनापि कर्तृत्वविशिष्टबोधकत्वं लकारस्य नास्तीति अनभिहिते इति सूत्रविरोधस्य प्रसक्तिरेव न; प्रत्युत कर्तृबोधकत्वस्य तृतीयायां विरहेण

3. अनभिहिते कर्तरि तृतीयेत्यनुशासनेऽपि सप्तम्यर्थो बोधकत्वमेव। तथा च चैत्रेण पच्यते इत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानान्न कर्तृत्व-विशिष्टधर्मिबोधकत्वमिति सूत्राविरोधः (का), अत्रैव पाठे भानादित्यनन्तरं नकारः नास्ति (कृ)।

**यदि च तत्र कर्त्रादिपदं धर्मपरं तथा च समभिव्याहृतलकाराद्यनभिहितं कर्तृत्वं तृतीयार्थः इति सूत्रार्थः, चैत्रेण पच्यते इत्यादौ कर्तृत्वस्य [4]तृतीयामात्रार्थत्वाल्लकारेण तदनभिधानं सुघटमित्युच्यते,**

सूत्रविरोध एव प्रतीयते । अपि च तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानं तृतीयाया एव कर्तृत्वविशिष्टाबोधकत्वे हेतुर्भवति न तु लकारस्य । किञ्चैवं व्याख्याने 'इत्यनुशासनेऽपि सप्तम्यर्थो बोधकत्वमेव' इत्युक्तिः किमर्थेति समालोचनीयम् । अपि चास्य सिद्धान्तिवाक्यत्वे, उपरितनस्य अनभिहिते कर्तरि तृतीया इति सूत्रस्य निष्कृष्टार्थप्रतिपादनपरस्य नैवमित्यादिना प्रवृत्तस्य ग्रन्थस्य, दूषणीयः पूर्वपक्षग्रन्थः कः इत्यपि विवेचनीयम् । तस्मात् 'अथानभिहिते . . . . . . . . . सूत्रार्थविरोधः' इति बहुपुस्तकसंमतः पाठः समीचीनः । कृतिविशिष्टे लकारशक्तेर्बाधात् लः कर्मणीति सूत्रघटकसप्तम्याः बोधकत्वार्थकत्वस्वीकारे तुल्ययुक्त्या अनभिहिते कर्तरि तृतीया इत्यत्रापि कर्तृपदोत्तरसप्तम्याः बोधकत्वमेवार्थो वाच्यः न वाचकत्वं कर्तृत्वविशिष्टे धर्मिणि शक्तेः गौरवेण बाधात् । कर्तृत्वविशिष्टबोधकत्वमपि तृतीयायां न संभवति । लकारार्थस्य कर्तृत्वस्य प्रथमान्तार्थे कर्तरि विशेषणतया अन्वयेन लकारस्य कर्तृत्वविशिष्टबोधकत्वसंभवेऽपि, तृतीयार्थकर्तृत्वस्य कर्तृभूतप्रकृत्यर्थविशेष्यतयैवान्वयेन अन्वयबलेनापि कर्तृत्वविशिष्टबोधकत्वं तृतीयायां नास्तीति सूत्रविरोध इति भावः । अत्र च पक्षे सप्तम्यर्थो बोधकत्वमेव इत्युक्तिः सफला भवति । तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतया भानं तृतीयाया एव कर्तृत्वविशिष्टाबोधकत्वे हेतुतयोपन्यस्तामिति सर्वं समञ्जसम् ॥

4. तृतीयार्थः इत्यनभिधानं सुघटम् (कृ)

**तदा तत्रानभिधानशब्दार्थो भवतैव निर्वक्तव्यः[5] । न तावदवाचकत्वं तदर्थः, लकारसामान्यस्यैव कर्तृत्वशक्तत्वेनानुक्त्यसंभवात्[6], कर्तरि यकोऽसाधुत्वादेव चैत्रः पच्यते इत्यादिप्रयोगवारणात् यगाद्यनुत्तरत्वस्य कर्तृत्वशक्ततावच्छेदककोटावनिवेशात् । तत्र तन्निवेशे पच्यन्ते माषाः, भिद्यते कुसूलः, लूयते केदारः इत्यादौ कर्मकर्तुः माषकुसूलकेदारादेः कर्तृत्वबोधानुपपत्तिः । न च तत्र स्वयमेवेत्यस्याध्याहारेणाव्ययस्वयंपदोत्तरतृतीयया कर्तृत्वं बोध्यते न तु लकारेणेति वाच्यम् । स्वयमित्यध्याहारं विनापि तत्र कर्तृत्वबोधाभ्युपगमात् ।**

ननु लकारसामान्यस्य कर्तृत्ववाचकत्वे चैत्रः पच्यते इत्यतः पाककर्ता चैत्रः इति बोधापत्तिरिति यगनुत्तरलत्वमेव कर्तृत्वशक्ततावच्छेदकं वक्तव्यम् । एवञ्च चैत्रेण पच्यते इत्यत्र यगुत्तरस्य लस्य न कर्तृत्ववाचकत्वमिति न तृतीयानुपपत्तिरित्यत आह—**कर्तरि यक इति ।** कर्तरि शप् इति सूत्रात् कर्त्रर्थकसार्वधातुके परे धातोः शबेव भवतीति यकोऽसाधुत्वम् ।

यगनुत्तरत्वस्य कर्तृत्वशक्ततावच्छेदककोटौ निवेशे प्रयोजनाभावमुक्त्वा बाधकमप्याह—**तत्र तन्निवेश इत्यादिना ।**

**अव्ययस्वयंपदोत्तरतृतीययेति ।** इदञ्च अव्ययात्सर्वा विभक्तिरुत्पद्यते । अत एव पृथिव्यामेव गन्ध इत्यादावेवकारप्रकृतिकसप्तम्याः आधेयत्वबोधकत्वं दीधितिकृद्भिरुक्तमित्याभिप्रायेण ॥

5. वक्तव्यः (ब-कृ)
6. अनुक्तेरसंभवात् (ब), अनुक्तिसंभवात् (कृ)

**तत्र लकारेण कर्तृत्वाबोधने कर्मकर्तुः 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यतिदेशसूत्रवैयर्थ्यापातात्[7] लकारस्य कर्मत्वबोधकतयैव यगात्मने-**

अत्र वैयर्थ्यापातादिति प्रतीकमुपादाय, "तत्र लकारस्य कर्तृत्वबोधकत्वेन माषादीनां कर्तृत्वे प्राप्ते तदपवादेन कर्मतुल्यत्वं विधीयते। लकारस्य कर्तृत्वाबोधकत्वे माषादीनां कर्तृत्वाप्राप्तौ तदपवादं कृत्वा कर्मत्वबोधनं व्यर्थमेव स्यात्, अप्राप्तस्यापवादासंभवादित्यर्थः। यदा च सूत्रेण माषादीनां कर्मत्वं प्राप्तं; तदा लकारस्यापि कर्मत्वबोधकत्वं प्राप्तं, कर्मत्वबोधकत्वे च कर्मत्वातिदेशफलभूता यगादिप्राप्तिरुपपद्यते इत्याह लकारस्येति" इत्यादर्शः प्रवृत्तः (५५१ पृ.) ॥ अत्र पच्यन्ते माषाः इत्यत्र यदि कर्तृत्वं न बोध्यते तदा कर्मत्वमात्रं बुध्यते इति फलितम्। एवञ्च लकारस्य कर्मत्वबोधकत्वात् चैत्रेण पच्यते तण्डुलः इत्यादाविव यगादीनां निर्वाहरूपस्य कर्मवद्भावातिदेशफलस्य लाभात् तादृशफलकं कर्मवत्कर्मणेति अतिदेशसूत्रं व्यर्थं स्यादिति मूलग्रन्थाशयः। अतिदेशसूत्रवैयर्थ्यापातादित्यत्र हेतुः लकारस्येत्यादिना अतिदेशफलनिर्वाहादिति पञ्चम्यन्तेन ग्रन्थेनाभिहितः। इमं स्वरसमनादृत्य, सूत्रवैयर्थ्यापातादित्यस्य अप्राप्तत्वेन कर्तृत्वस्यापवादासंभवादिति तात्पर्यवर्णनं, वैयर्थ्यापातादिति ग्रन्थोक्तार्थे हेतुप्रतिपादकस्य लकारस्येत्यादिग्रन्थस्य अतिदेशसूत्रेण कर्मत्वप्राप्त्यनन्तरं यगादिप्राप्तिरित्येवंपरतया व्याख्यानञ्च न समञ्जसमिति सुधियो विवेचयन्तु ॥

7. अतिदेशवैयर्थ्यापातात् (ब-क्र)

पदचिण्चिण्वद्भावरूपातिदेशफलनिर्वाहात् । न च कर्मकर्तरि लकाराधीनकर्मत्वबोधस्याप्यावश्यकता, वस्तुगत्या कर्मकर्तुः[8] कर्मत्वातिदेशे चैत्रः स्वं पश्यति स्वं हन्तीत्यादावपि यगात्मनेपदादिप्रसङ्गात् लकारेण कर्मत्वविवक्षायामेव कर्मत्वातिदेशस्य स्वीकरणीयत्वात्, तथा च त्वन्मतेऽपि कर्मत्वातिदेशासंगतिरिति वाच्यम् । कर्मत्वविवक्षायामपि कर्तृत्वविवक्षणे कर्तृकर्मादिसंज्ञासमावेशविरोधेन परत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधेनात्मनेपदचिण्वद्भावाद्यनुपपत्तेः । कर्तरि शप् इत्याद्यपवादविषयतया यकोऽप्यनिर्वाहादतिदेशसार्थकत्वात्[9] ।

वस्तुगत्या कर्मकर्तुः=आख्यातार्थकर्मत्वानन्वयिनः धात्वर्थकर्मीभूतस्य धात्वर्थनिरूपितकर्तृत्ववतः ।

**स्वं पश्यतीति** ॥ तत्र कर्तुरेव धात्वर्थदर्शनकर्मत्वादिति भावः ।

**त्वन्मतेऽपीति** ॥ भिद्यते कुसूलः इत्यादौ आख्याताधीनकर्तृत्वबोधस्वीकर्तृमतेऽपीत्यर्थः ।

**संज्ञासमावेशविरोधेनेति** ॥ 'आकडारादेका संज्ञा' इति सूत्रेण 'कडाराः कर्मधारये' इति सूत्रात् प्राक् एकस्य एकैव संज्ञा इति बोधनादिति भावः ।

**संज्ञाया बाधेनेति** ॥ यगादीनां संज्ञाप्रयुक्तत्वमेवेति भावः ।

8. कर्तुः (का-कृ-आ)

9. इति सार्थकत्वात् (ब-कृ)

. न च कर्मत्वकर्तृत्वयोरुभयोस्तत्र बोधस्वीकारे तदेकतरस्य आख्यातार्थतया उद्देश्यतावच्छेदकतया भानासंभवात् समूहालम्बनबोध एव स्वीकरणीय इति वाक्यभेदापत्तिरिति वाच्यम् । एकत्र द्वयमिति रीत्या तदुभयबोधस्य समूहालम्बनविलक्षणस्य स्वीकारात् ॥

**उद्देश्यतावच्छेदकतयेति** ॥ पचति चैत्रः सुन्दरः इति वाक्यात् आख्यातार्थपाककर्तृत्वोद्देश्यतावच्छेदककस्य सौन्दर्यविधेयकस्य पाककर्ता चैत्रः सुन्दरः इत्याकारकबोधस्यानुदयात् आख्यातार्थस्योद्देश्यतावच्छेदकतया-न्वयो न व्युत्पन्नः, अपि तु विधेयतयैव । एवञ्च पच्यन्ते माषाः इत्यत्र पाककर्माणः माषाः पाककर्तारः इति बोधो न संभवतीति भावः ।

**समूहालम्बनविलक्षणस्येति** ॥ समूहालम्बनज्ञाने प्रकारताभेदा-द्विशेष्यताभेदः, एकत्र द्वयमिति रीत्या जायमाने ज्ञाने तु प्रकारताद्वयनिरूपिता विशेष्यता एकैवेति वैलक्षण्यं बोध्यम् । विशेष्यताभेदाभावान्न वाक्यभेदः इति भावः ।

अत्र "पच्यन्ते माषाः इत्यत्र यदि माषाणां कर्मत्वेन कर्तृत्वेन च बोधः स्यात् तदा उभयोरेव कर्मत्वकर्तृत्वयोराख्यातार्थत्वेन विशेषाभावात् एकतरस्योद्देश्यतावच्छेदकतया भानं न संभवति" इत्यादर्शः । पच्यन्ते माषाः इत्यत्र उभयोर्बोधे वाक्यभेदस्तदा न स्यात् । यदि कर्मत्वकर्तृत्वान्य-तरविशिष्टमाषोद्देश्यकः तदुभयान्यतरविधेयकबोधः ततो जायेत । स च न संभवति । आख्यातार्थोद्देश्यतावच्छेदककबोधस्याव्युत्पन्नत्वात् । एतादृशाव्युत्पत्तिं सूचयितुं भट्टाचार्यैः आख्यातार्थतयेत्यभिहितम् । सति चैवं आख्यातार्थत्वेन विशेषाभावादिति विवरणं न समञ्जसम् । एकतरस्योद्देश्यतावच्छेदकतया भानाभावे उभयोराख्यातार्थत्वेन विशेषाभावः कथमुपयुज्यते इति चिन्तनीयम् ॥

**यदि च विधेयद्वयज्ञानं[10] समूहालम्बनात्मकमेव। अत एव विधेयभेदे वाक्यभेदः इति मीमांसकसिद्धान्तोऽपीत्युच्यते। तदा अस्तु धातोरेव स्वकर्मकक्रियायां लक्षणा। कर्तृत्वसंबन्धमध्य एव वा स्वनिरूपकक्रियाकर्मत्वस्याप्यन्तर्भावः[11]। स्नुनमोरकर्मकत्वेऽपि[12]**

**लक्षणेति** ॥ पच्यन्ते माषाः इत्यत्र धात्वर्थस्य माषकर्मकपाकस्य आख्यातार्थकर्तृत्वे, तस्य च प्रथमान्तार्थे माषे अन्वयः। लक्षणाकल्पने गौरवादाह—**कर्तृत्वसम्बन्धमध्ये इति** ॥ एवञ्च धात्वर्थपाकान्वितस्याख्यातार्थकर्तृत्वस्य, स्वनिरूपकक्रियाकर्मत्वविशिष्टाश्रयत्वसंबन्धेन प्रथमान्तपदार्थे अन्वय इति फलितम्।

अत्र "स्वनिरूपकक्रियाकर्मत्वसम्बन्धेन माषादिलक्षणकर्तरि कर्तृत्वस्यान्वयः कर्तव्यः इति कर्तृत्वमात्रस्य विधेयत्वेन न वाक्यभेदप्रसङ्गः" इत्यादर्शः मूलस्थं मध्येपदमननुसन्धाय प्रवृत्तः। अत्र निरुक्तसंबन्धमात्रेण कर्तृत्वस्य माषे अन्वये माषेषु कर्तृत्वं न बुद्धं भवति। अतः निरुक्तकर्मत्वविशिष्टाश्रयत्वसंबन्धेनान्वयो वर्णनीयः। इत्थञ्च संबन्धमध्ये इत्यत्र मध्येपदं सार्थकं भवति।

ननु 'न दुहस्नुनमां यक्चिणौ' इति सूत्रेण स्नुनमधातूत्तरं यक्चिणोर्निषेधः नोपपद्यते तयोरेवाप्राप्तेः। न च कर्मवत्कर्मणा तुल्यक्रियः इति सूत्रेण कर्मत्वातिदेशात् तयोः प्राप्तिरस्तीति वाच्यम्। तयोरकर्मकत्वेन तद्धात्वर्थकर्मत्वस्यैवाप्रसिद्ध्या तत्कर्तुः कर्मकर्तृत्वासंभवादित्याशङ्क्याह—**स्नुनमोरिति** ॥ ण्यर्थः कर्तृत्वनिर्वाहकव्यापारः। चिणो निषेधात् प्रास्नोष्ट इत्यादौ औत्सर्गिकः सिच्प्रत्ययः, अनंस्त इत्यादौ सक्प्रत्ययश्च श्रूयते ॥

10. विधेयद्वयत्वज्ञानं (क)
11. इत्यलं (ब-क)
12. एवमकर्मकत्वेऽपि (ब-क)

**प्रस्नुते गौः, प्रास्नोष्ट गौः, नमते दण्डः,[13] अनंस्त दण्डः इत्यादौ ण्यर्थान्तर्भावेणैव कर्मकर्तृतानिर्वाहेण 'न दुहस्नुनमां यक्चिणौ' इति यक्चिण्निषेधोपपत्तिः ।**

**एवं चैत्रेण पक्ष्यते इत्यादौ कर्तृत्ववाचकताया दुरपह्नवत्वात्तृतीयानुपपत्तिः । चैत्रेण पक्ष्यते इत्यादौ लकारेण कर्तृत्वबोधनात्[14] स्याद्युत्तरलकारसाधारणरूपस्य तद्वाचकतावच्छेदकताध्रौव्याच्च ।**

प्रासङ्गिकं समाप्य आख्यातस्य कर्तृत्वावाचकत्वं कर्तृत्वानभिधायकत्वमिति पक्षे दूषणान्तरमाह — **एवमिति** ॥ **कर्तृत्वबोधनादिति** ॥ उभयपदिनः पचधातोः लृटि कर्तरि पक्ष्यते इत्यपि रूपम् । एवञ्च चैत्रः पक्ष्यते इति वाक्यात् पाकानुकूलभविष्यत्कृतिमांश्चैत्रः इति बोधः इति भावः ॥

अत्र " एवमिति, यथा कर्मवत्कर्मणा तुल्यक्रियः इति सूत्रवैयर्थ्यापत्तिः एवमिति पूर्वेण संगतिः" इत्यादर्शः (५५३ पृ.) । पूर्वं कर्तृत्वावाचकत्वं कर्तृत्वानभिधायकत्वमिति पक्षे कर्तृत्वानभिधायकाख्यातासिद्धिर्दोष उपन्यस्तः । अद्य तु तुष्यतु दुर्जनः इति न्यायेन चैत्रेण पच्यते तण्डुलः इत्यादौ आख्यातस्य कर्तृत्वावाचकत्वेन चैत्रपदोत्तरं तृतीयाया उपपत्तावपि चैत्रेण पक्ष्यते इत्यत्र लकारे कर्तृत्ववाचकताया आवश्यकत्वात् तृतीयानुपपत्तिर्दोष उच्यते इति निरुक्तदोषेणैव समुच्चयो विवक्षितः इति मूलात् स्वरसतः प्रतीयते । सति चैवं एवमित्यस्य अतिदेशसूत्रवैयर्थ्यापत्तिवदित्यर्थवर्णनं कथं संगच्छते इति सुधीभिर्विभावनीयम् ॥

13. दण्डमूलं (ब-कृ)
14. स्याल्लकार (ब-कृ), अत्र स्योत्तरलकार इत्यर्थवर्णनं क्लिष्टम् ।

**नापि तद्बोधकत्वं तदनभिधानम् । चैत्रेण पच्यते इति वाक्यजन्यबोधे कर्तृत्वविषयके तादृशवाक्यघटकसकलपदानामेव जनकतया तद्घटकलकारस्यापि कर्तृत्वबोधकताया वाङ्मात्रेणाप्रत्याख्येयत्वात् ॥**

[15] **तद्विषयत्वाप्रयोजकत्वं लादीनां तदनभिधायकत्वम् । चैत्रेण पच्यते इत्यादौ धात्वर्थविशेषणतया कर्तृत्वविषयता तृतीया-**

प्रथमाविचारे 'लादीनां कर्तृत्वानभिधायकत्वं न कर्तृत्वावाचकत्वं कर्तृत्वानभिधायकाख्यातस्यैवाप्रसिद्धेः' इति ग्रन्थेन सूत्रितमर्थं आख्यातसामान्यस्य कर्तृत्ववाचकत्वे युक्त्युपन्यासेन विस्तरेण विवृत्य तत्रानाशङ्कितं अनभिधायकत्वप्रकारं दूषयितुमुपक्रमते—**नापीति** ॥

**सकलपदानामिति** ॥ कर्तृत्वविषयके तद्वाक्यजन्यमहावाक्यार्थबोधे चैत्रेण पच्यते इति वाक्यम् कारणम् । वाक्यञ्च मिथस्साकांक्षपदसमूहः । समुदायश्च प्रत्येकानतिरिक्तः इति वाक्यघटकसकलपदानां कर्तृत्वविषयकबोधजनकत्वं बोध्यम् ।

कर्तृत्वाबोधकत्वं परिष्कृत्य शङ्कते **तद्विषयत्वाप्रयोजकत्वमिति** ॥ धात्वर्थविशेषणतयेत्यत्राभेदस्तृतीयार्थः कर्तृत्वविषयतायामन्वेति ।

15. नापि तद्विषयत्वाप्रयोजकत्वं (का), कर्तृत्वविषयत्वाप्रयोजकत्वं (ब-कृ)

**प्रयोज्यैव नत्वाख्यातप्रयोज्या । आख्यातस्याश्रयत्वसंबन्धावच्छिन्नकर्तृत्वप्रकारताया एव कार्यतावच्छेदकत्वादित्यपि[16] न सम्यक् ॥**

**पचतीत्यवान्तरवाक्यार्थबोधासंग्राहकतया प्रकारताया एवाख्यातजन्यतावच्छेदकत्वासंभवात् प्रथमान्तपदसमभिव्याहारज्ञानस्य योग्यताज्ञानादेर्वा जन्यतायामुक्तप्रकारताया अवच्छेदकत्वात् । यदि च**

विवरणम् ।

**आश्रयत्वसंबन्धावच्छिन्नेति** ॥ चैत्रेण पच्यते तण्डुलः इति वाक्यजन्यबोधे कर्तृत्वस्य निरूपकतासंबन्धेन धात्वर्थपाके प्रकारतया भानात् कर्तृत्वनिष्ठा प्रकारता नाश्रयत्वसंबन्धावच्छिन्नेति न तस्या आख्यातप्रयोज्यत्वमिति भावः ।

अत्र " चैत्रः पाकानुकूलकृतिमानिति बोधोदयात् कर्तृत्वप्रकारताविषयकबोधजनकत्वरूपं कर्तृत्वप्रकारताप्रयोजकत्वमाख्यातस्यास्ति " इत्यादर्शः (५५४-पृ.) । न ह्यत्र बोधे कर्तृत्वप्रकारता भासते तस्याः तदनुव्यवसाये एव भानात् । तस्मान्नैवंरूपं प्रयोजकत्ववर्णनं युक्तम् । किन्तु कर्तृत्वप्रकारत्वावच्छिन्नशाब्दबोधनिष्ठजन्यतानिरूपकत्वं कर्तृत्वप्रकारताप्रयोजकत्वम् इति बोध्यम् ॥

**बोधासंग्राहकतयेति** ॥ पचतीत्यतः पाकानुकूला कृतिः इति कर्तृत्वविशेष्यकस्यैव बोधस्योदयादिति भावः । धर्मी—आश्रयः ।

16. अपि सम्यक् (का)

**प्रथमान्तपदसमभिव्याहृताख्यातपदजन्यतावच्छेदकतयैव धर्मिविषयतानिरूपितकर्तृत्वविषयताया आख्यातप्रयोज्यत्वम्, कर्तृत्वविषयतासामान्यश्च नाख्यातपदज्ञानसामान्यजन्यतावच्छेदकं तादृशसामान्यकार्यकारणभावे मानाभावादित्युच्यते, तदापि चैत्रेण पच्यते तण्डुलः इत्यादिवाक्यार्थबोधस्य परस्परसमभिव्याहृतपदसमूहरूपवाक्यज्ञानहेतुकतया तद्वाक्यार्थविषयतान्तःपातिकर्तृत्वविषयताया वाक्यघटकाख्यातप्रयोज्यत्वं दुर्वारमेवेति ।**

**मैवं—अनभिहिते कर्तरि तृतीया इत्यस्य कर्तृत्वविशेष्यतया प्रातिपदिकार्थे अविवक्षिते सति[17] तृतीया इत्यर्थः ॥**

विवरणम् ।

**आख्यातप्रयोज्यत्वमिति** ॥ तथा च चैत्रेण पच्यते इति वाक्यजन्यबोधीयकर्तृत्वविषयतायाः धर्मिविषयत्वानिरूपितत्वेन आख्याताप्रयोज्यत्वमिति तृतीयानिर्वाहः इति भावः ।

नन्वेवमपि कर्तृत्वविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति आख्यातपदज्ञानत्वेन कारणत्वात् तद्बलेनैव निरुक्तवाक्यजन्यबोधीयकर्तृत्वविषयताया अपि आख्यातप्रयोज्यत्वमस्त्येवेत्यत आह—**कर्तृत्वविषयतासामान्यश्चेति** ॥

कर्तृत्वाभिधानस्थले चैत्रः पचतीत्यादौ चैत्रादिपदोत्तरं तृतीयावारणमेव अनभिहिते इत्यधिकारे कर्तृकरणयोस्तृतीया इत्यनुशासनस्य फलम् । तादृशस्थले सर्वत्र कर्तृत्वविशेष्यतयैव चैत्रादिप्रातिपदिकार्थविवक्षा दृश्यते तथैव बोधात् । अतश्च कर्तृत्वविशेष्यतया प्रातिपदिकार्थस्याविवक्षणमेवानभिधानपदार्थः इत्याशयेन सिद्धान्तमाह—**मैवमित्यादिना** ॥

17. 'सति' नास्ति (ब-क)

**प्रातिपदिकार्थविशेषणतयैव कर्तृत्वे अविवक्षिते इति यावत् । अवधारणपरतया**[18] **च प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते**

विवरणम् ।

नन्वेवं सति चैत्रेण ग्रामो गम्यते इत्यत्र ग्रामपदोत्तरं तृतीया स्यात् ग्रामप्रातिपदिकार्थस्य कर्तृत्वविशेष्यतया अविवक्षितत्वात् । न च तथापि ग्रामस्य धात्वर्थकर्तृत्वाभावेन न ग्रामपदोत्तरं कर्तरि तृतीयेति वाच्यम् । एवमपि चैत्रेण स्वं दृश्यते इत्यत्र चैत्रपरस्वपदोत्तरं तृतीया स्यात् तदर्थस्य कर्तृत्वविशेष्यतया अविवक्षितत्वात् वस्तुतः धात्वर्थकर्तृत्वाच्चेत्यत आह— **प्रातिपदिकार्थविशेषणतयैवेति ।**

**यावदिति ।।** कर्तृत्वतात्पर्यशून्यत्वमेव लादीनां तदनभिधायकत्वं, तात्पर्यं विवक्षा । प्रातिपदिकार्थनिष्ठविशेष्यतानिरूपितकर्तृत्वनिष्ठप्रकारतामात्रनिरूपकबोधपरत्वाभाव एव लादीनामनभिधायकत्वमिति पर्यवसितमिति भावः ।

**अवधारणपरतयेति ।** प्रातिपदिकार्थविशेषणतयेत्यत्र एवकारार्थघटनयेति यावत् ।

प्रातिपदिकार्थविशेषणतयैवाविवक्षितत्वं प्रातिपदिकार्थविशेष्यतया अविवक्षितत्वे सति प्रातिपदिकार्थविशेषणतया विवक्षितत्वस्याभावः प्रातिपदिकार्थविशेष्यतया विवक्षितत्वे सति प्रातिपदिकार्थविशेषणतया अविवक्षितत्वे पर्यवस्यति । तत्र द्वितीयदलं वैयर्थ्यात्परित्यज्य लघुभूतं पर्यवसितमर्थमाह— **प्रातिपदिकार्थविशेष्यतयेति ।** न चैवं सति चैत्रेण स्वं दृश्यते इत्यत्र

18. अवधारणतया (का)

**तदुत्तरं तृतीया इति पर्यवसितम् ।**

**अत्रैवं[19] चैत्रः पचतीत्यादावाख्यातेन कर्तृत्वबोधनात्**

विवरणम् ।

स्वपदोत्तरं तृतीया स्यात् चैत्रविशेष्यतया कर्तृत्वस्य विवक्षितत्वात् चैत्रस्य स्वपदार्थत्वाच्चेति वाच्यम् । तत्प्रातिपदिकप्रयोज्यप्रकारतानिरूपितविशेष्यतया कर्तृत्वे विवक्षिते तत्प्रातिपदिकोत्तरं तृतीया इति सूत्रार्थः । अत्र च चैत्रप्रातिपदिकप्रयोज्यप्रकारतानिरूपितविशेष्यतयैव कर्तृत्वस्य विवक्षा, न तु स्वपदप्रयोज्यप्रकारतानिरूपितविशेष्यतयेति न स्वपदोत्तरं तृतीया इत्याशयः । अत एव प्रथमाविचारे, तत्तत्प्रातिपदिकार्थविशेष्यतया इत्यभिहितं भट्टाचार्यैरिति बोध्यम् ।

कर्तृकरणयोस्तृतीया इत्यत्र अनभिहिते इति सूत्रानुवृत्तिवैयर्थ्यं शङ्कते अत्रेति ॥ नाशङ्क्यमिति व्यवहितेन संबन्धः । किं विशेष्यतयान्वयित्वपर्यन्तनिवेशनेनेत्यत्र हेतुः तृतीयापत्तिविरहादिति ग्रन्थेन दर्शितः । प्रातिपदिकार्थान्वयितया कर्तृत्वे विवक्षिते तृतीया भवतीति सूत्रार्थस्वीकारे चैत्रः पचतीत्यत्र चैत्रपदोत्तरं तृतीया स्यात् । आख्यातार्थकर्तृत्वान्वयितया चैत्रप्रातिपदिकार्थस्य विवक्षितत्वात् । अतः प्रातिपदिकार्थविशेष्यतया कर्तृत्वविवक्षायामित्येव सूत्रार्थो वाच्यः । निरुक्तस्थले च प्रातिपदिकार्थविशेषणतयैव कर्तृत्वविवक्षणात् न तृतीया इत्येवमाशङ्का न कार्या । उक्तार्थानामप्रयोगः इति न्यायेन, आख्यातार्थकर्तृत्वस्य चैत्रान्वयविवक्षायां पुनः चैत्रवृत्तिकर्तृत्वविवक्षाया असंभवेन निरुक्तस्थले तृतीयापत्तेरसंभवादिति समुदितभावः ।

व्युत्पत्तिसूचकत्वेन — नियमसूचकत्वेन ।

19. अतः (ब.-कृ.)

**उक्तार्थानामप्रयोगः इति न्यायात्तृतीयापत्तिविरहात् प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायामित्येव सम्यक्, किं विशेष्यतयान्वयित्वपर्यन्तनिवेशनेनेति अनभिहिते[20] इत्यनुवृत्तिरफला तावत्पर्यन्तलाभस्यैव तदनुवृत्तिफलत्वादिति नाशङ्क्यम् । सङ्ख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैवान्वयः इति व्युत्पत्तिसूचकत्वेन विशेष्यतयान्वयित्वपर्यन्तस्यावश्यं विवक्षणीयत्वात् ॥**

विवरणम् ।

पर्यवसितमित्यनन्तरं "अतश्चैत्रः पचतीत्यादावाख्यातेन कर्तृत्वबोधनात् उक्तार्थानामप्रयोगः इति न्यायात्तृतीयापत्तिविरहात् । प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायामित्येव सम्यक्, किं विशेष्यतयान्वयित्वपर्यन्तनिवेशनेनेति नाशङ्क्यम् । सङ्ख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैवान्वयः इति व्युत्पत्तिसूचकत्वेन विशेष्यतयान्वयित्वपर्यन्तस्य विवक्षणीयत्वात् ।" इति पाठान्तरं दृश्यते । तच्चैवं व्याचक्षते—ननु चैत्रविशेष्यतया कर्तृत्वे विवक्षिते चैत्रेण चैत्रः पचति इति कुतो न प्रयोगः इत्यत आह—**उक्तार्थानामिति** । विशेष्यतया वा विशेषणतया वा कर्तृत्वे बोधिते चैत्रकर्तृकक्रियालाभात् आख्याते कर्तृत्वबोधकतया विवक्षिते कर्तृत्वस्य न कथञ्चिदपि पुनर्विवक्षासंभवः इति प्रातिपदिकार्थविशेष्यतया कर्तृत्वाविवक्षाया अभावान्न तृतीयाप्रसक्तिरिति भावः । प्रातिपदिकार्थान्वयितयेत्यादिग्रन्थेन शङ्कान्तरमुपक्षिप्तमिति ।

अत्र चैत्रः पचतीत्यादौ तृतीयापत्तिविरहात् इति ग्रन्थेन चैत्रपदोत्तरप्रथमास्थाने तृतीयापत्तिर्नास्तीत्येव स्वरसतः प्रतीयते । न तु चैत्रेणेति

20. निवेशनेनेति नाशङ्क्यम् (ब.-कृ.)

**यथाश्रुतसूत्रार्थानुरोधेन कर्तरि लकारतृतीयाविभक्त्योः शक्तिवादिभिः वैयाकरणैरपि प्रातिपदिकार्थविशेष्यतया कर्तरि विवक्षिते तृतीया इत्येव सूत्रार्थो वाच्यः । अन्यथा चैत्रेण पच्यते इत्यादौ कर्तुरनभिधानस्योक्तक्रमेण कर्तृत्वानभिधानवद्दुर्वचत्वापत्तेरित्यलमधिकेन ॥**

**अथ अनभिहिते कर्तरि तृतीया इत्यस्योक्तार्थकत्वे चैत्रादिकर्तृकत्वविशेषितपाकादिविवक्षया चैत्रेण पचतीत्यादिप्रयोगापत्तिः । न च परस्मैपदार्थकर्तृत्वान्वयिविशेष्यविरहान्न तथा प्रयोगः ।**

विवरणम् ।

पदान्तरस्य तृतीयान्तस्य प्रयोगापत्तिर्नेति । एवं अनभिहिताधिकारबलेनैव प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते इति सूत्रार्थो वर्णितः । अनभिहिताधिकारे कर्तृकरणयोस्तृतीया इति सूत्रकरणस्य फलं चैत्रः पचतीत्यादौ कर्तृत्वाभिधानस्थले चैत्रपदोत्तरं तृतीयावारणमेव । इत्थं च कर्तृत्वाभिधानस्थले तृतीयावारणोपायमनभिधाय प्रातिपदिकार्थान्वयितया कर्तृत्वविवक्षायामित्येव सूत्रार्थोऽस्तु इत्याक्षेपो न समञ्जसः इति पूर्वोक्तपाठ एव साधुरिति प्रतिभाति ॥

उक्तक्रमेण—कर्त्रवाचकत्वं कर्त्रबोधकत्वं कर्तृविषयत्वाप्रयोजकत्वञ्च कर्त्रनभिधायकत्वं न संभवति इति रीत्येत्यर्थः ।

**चैत्रेण पचतीत्यादि प्रयोगापत्तिरिति ॥** चैत्रप्रातिपदिकार्थविशेष्यतया कर्तृत्वस्य विवक्षितत्वादिति भावः ।

विशेष्यतयापि कर्तृत्वबोधसंभवात् । चैत्रमैत्रोभयकर्तृकपाकस्थले चैत्र-कर्तृकपाककर्ता मैत्रः इत्यन्वयतात्पर्येण चैत्रेण पचति मैत्रः इति प्रयोगस्य दुर्वारत्वाच्च । न च कर्तृत्वातिरिक्ते विशेषणतापन्नायां, कर्तृत्वे वा विशेषणतानापन्नायामेव क्रियायां[21] तृतीयार्थकर्तृत्वान्वयो व्युत्पन्न इति वाच्यम् ॥

चैत्रेण पाचयति मैत्रः इत्यादौ ण्यर्थकर्तृत्वविशेषणतापन्ने पाकादौ चैत्रादिकर्तृकत्वान्वयेन तादृशव्युत्पत्तेरसिद्धेः । न च लकारार्थकर्तृत्वविशेषणतानापन्नक्रियाविशेषणतया कर्तृत्वबोधकत्वं सुपां

विवरणम् ।

**विशेष्यतयापीति** ॥ प्रथमान्तपदासमभिव्याहारे पचतीत्यतः कृतिविशेष्यकस्य पाकानुकूला कृतिरिति बोधस्य स्वीकारादिति भावः ।

ननु कर्तृत्वातिरिक्तविशेषणतापन्नक्रियायामेव तृतीयार्थकर्तृत्वान्वय-नियमे, चैत्रेण स्थीयते, शय्यते इत्यादौ धात्वर्थे तृतीयार्थ-कर्तृत्वान्वयो न स्यात् भावाख्यातस्य निरर्थकत्वेन धात्वर्थस्य कर्तृत्वाविशेषण-त्वाभावादित्यत आह— **कर्तृत्वे वेति** । तथा च भावाख्यातस्थले धात्वर्थ-मुख्यविशेष्यकस्यैव बोधस्योदयात् धात्वर्थस्य कुत्राप्यविशेषणत्वेन कर्तृत्व-विशेषणतानापन्नत्वात् तत्र तृतीयार्थान्वये न दोषः इति भावः ।

**ण्यर्थेति** । णिजर्थः कर्तृत्वनिर्वाहकव्यापारः । चैत्रकर्तृकपाककर्तृत्व-निर्वाहकव्यापारकर्ता मैत्रः इति चैत्रेण पाचयति मैत्रः इति वाक्याधीनो बोधः ।

21. विशेषणतानापन्नायां क्रियायामेव (ब.-कृ.)

व्युत्पन्नमिति न कश्चिद्दोषः इति वाच्यम् । उक्तस्थले चैत्रेण पक्ववान् मैत्रः इति प्रयोगापत्तेः ।

मैवं — आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वाविशेषणतानापन्नक्रियायामेव[22] विशेषणतया कर्तृत्वं तृतीयया बोध्यते इति नियमः । चैत्रेण पाचयतीत्यादौ कर्तृत्वनिर्वाहकव्यापारो णिजर्थः । तत्राश्रयातिरिक्ते व्यापारे विशेषणं कर्तृत्वमिति तद्विशेषणतापन्नक्रियायां तृतीयार्थकर्तृत्वविशेषणत्वे न किञ्चिद्बाधकम् । चैत्रेण पचति मैत्रः इत्यादयश्च न प्रयोगाः तत्राश्रये एव कृतेर्विशेषणतया तद्विशेषणतापन्नक्रियायां तृतीयया कर्तृत्वबोधनासंभवात् ॥

विवरणम् ।

उक्तस्थले — चैत्रमैत्रोभयकर्तृकपाकस्थले ।

**चैत्रेण पक्ववानिति ।** अत्र कर्त्रर्थकः क्तवतुप्रत्ययः ।

**प्रयोगापत्तेरिति ।** क्रियायाः कृदर्थविशेषणत्वेऽपि लकारार्थकर्तृत्वाविशेषणत्वादिति भावः ।

**आश्रयातिरिक्तेत्यादि ।** तथा च आख्यातार्थकर्मत्वविशेषणतापन्ने (चैत्रेण गम्यते ग्रामः इत्यादौ) इतरविशेषणतानापन्ने (चैत्रेण सुप्यते इत्यादौ) णिजर्थकर्तृत्वविशेषणतापन्ने च धात्वर्थे (चैत्रेण पाचयति मैत्रः इत्यादौ) तृतीयार्थकर्तृत्वान्वयः इति पर्यवसितम् ।

अत्र "उत्तरमाह चैत्रेणेति, चैत्रेण पाचयति मैत्रः इत्यत्र चैत्रवृत्तिकृतिजन्यो यः पाकः तादृशपाकानुकूलकृतिमान् मैत्रः इति बोधोदयात्

22. क्रियायां तृतीयार्थकर्तृत्वान्वयव्युत्पत्तौ न किञ्चिद्बाधकम् (ब.-कु.)

**कृतिविशेष्यकबोधाभिप्रायेण चैत्रेण पचतीति वारणायाश्रयविशेषणत्वमुपेक्ष्याश्रयातिरिक्ताविशेषणत्वं निवेशितम् । अनभिहिते कर्तरि तृतीया इत्यस्यापि निरुक्तक्रियाविशेषणतया प्रातिपदिकार्थान्वयिकर्तृत्वविवक्षायां तदुत्तरं तृतीया भवति इत्येवार्थः इति दिक् ।**

विवरणम्

मैत्रवृत्ति यत् ण्यर्थभूतं कर्तृत्वं तत्र विशेषणतापन्नायामेव पाकक्रियायां चैत्रवृत्तितृतीयार्थभूतकर्तृत्वस्यान्वयोऽस्त्येवेति उक्तव्युत्पत्तिः स्वीकर्तुं न शक्यते । तथा च चैत्रेण पचति मैत्रः इति प्रयोगापत्तिस्तदवस्थैव । " इत्यादर्शः । (५५८-पृ॰)

अत्रैवं शाब्दबोधवर्णनमसंगतम् । यतः णिजर्थः कर्तृत्वनिर्वाहकव्यापारः । स च आश्रयतया हेतुकर्तरि प्रथमान्तार्थे मैत्रे अन्वयिन्या आख्यातार्थकृतौ अनुकूलतयान्वेति । प्रयोज्यकर्तृचैत्रादिनिष्ठमेव कर्तृत्वं णिजर्थः । अत एव द्वितीयाग्रन्थे गतिबुद्धीत्यादिसूत्रस्य नियामकत्वपक्षोपपादनावसरे निरुक्तस्थले तृतीयार्थकृतेः धर्मिपारतन्त्र्येण णिजर्थकर्तृत्वे अभेदेनान्वयः स्वीकृतो भट्टाचार्यैः । इत्थञ्च तत्र मैत्रनिष्ठं कर्तृत्वं न णिजर्थः अपित्वाख्यातार्थः इति बोध्यम् ॥

नन्वेवं नियमस्वीकारेऽपि चैत्रमैत्रोभयकर्तृकपाकस्थले चैत्रेण पचति मैत्रः इति प्रयोगापत्तिर्दुर्वारा । प्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते तृतीया इत्यर्थकस्य अनभिहिते कर्तरि तृतीया इत्यनुशासनस्य प्रवृत्तेः तृतीयायाः साधुत्वादित्यतः उक्तनियमानुसारेण अनुशासनार्थमाह— **अनभिहिते कर्तरि तृतीया इत्यस्यापीति** । तथा च तत्र अनुशासनाप्रवृत्त्या न तृतीयायाः साधुत्वमिति भावः ॥

अत्र " यदा च आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वस्यान्वयो भवतीत्युच्यते, तदा तु उक्तकृतिविशेष्यक-

**कर्तृत्वञ्च चैत्रः पचतीत्यादौ क्रियानुकूला कृतिरेव ॥**

विवरणम्

बोधस्वीकारेऽपि, कर्तृत्वस्य आश्रयातिरिक्ते पाकव्यापारे विशेषणत्वादेवात्राश्रयातिरिक्ताविशेषणतापन्नत्वं नास्तीति व्यापारविशेषणतापन्नकर्तृत्वे विशेषणतानापन्नक्रियायामपि तृतीयार्थकर्तृत्वान्वयस्य नियमविरुद्धत्वात्तृतीयापत्तिः, तथा चैत्रेण पचतीति प्रयोगापत्तिश्च नास्त्येवेत्यर्थः" (५५९ पृ.) इत्यादर्शः । आश्रयविशेषणतापन्नकर्तृत्वविशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वस्यान्वयः इति नियमोपगमे चैत्रेण पचतीति प्रयोगापत्तिः । आख्यातार्थकृत्यन्वयिनः प्रथमान्तपदार्थस्याभावेन लकारार्थकृतेः मुख्यविशेष्यतया भानात् तद्विशेषणतापन्नायामपि आश्रयविशेषणकृतिविशेषणतानापन्नायां क्रियायां चैत्रेणेति तृतीयान्तार्थकर्तृत्वान्वयसंभवात् । अभावद्वयोपादाने चाख्यातार्थकृतेः मुख्यविशेष्यत्वेन विशेषणत्वस्यैवाभावात् सुतरामाश्रयातिरिक्ताविशेषणत्वमायातमिति तद्विशेषणतापन्नक्रियायां तृतीयार्थ कर्तृत्वान्वयो व्युत्पत्तिविरुद्धः इति भट्टाचार्यग्रन्थस्वरससिद्धोऽर्थः । अत्र चापाद्यमानतृतीयाविभक्त्यर्थस्य कर्तृत्वस्य आश्रयातिरिक्ते धात्वर्थव्यापारे विशेषणत्वं ततश्च आश्रयातिरिक्ताविशेषणतानापन्नत्वञ्चोपपाद्यमानं प्रकृते कथमुपयुज्यते? धात्वर्थविशेष्यतया भासमानस्य कर्तृत्वस्य आश्रयातिरिक्तविशेषणतापन्नत्वोपपादनं हि प्रकृते उपयुज्यते इति सुधीभिर्विभावनीयम् ॥

प्रासङ्गिकं विचारं समाप्य, लकारसामान्यशक्यतावच्छेदकं निरूपयितुं कर्तृत्वस्वरूपमाह—**कर्तृत्वञ्चेति** ॥

**कृतिरेवेति** ॥ एवेन कर्तृत्वे क्रियाश्रयत्वरूपतायाः अखण्डत्वस्य च व्यवच्छेदः । कृतिपर्यन्तव्यापारस्य धात्वर्थत्वाभावेन अधिश्रयणादिव्यापाराश्रयत्वस्य कर्तरि चैत्रादौ बाधात् सखण्डस्य कथमपि निर्वचनासंभवे

[23] **तस्याश्चानुकूलकृतित्वेन** [24] **कृतित्वमात्रेण वाख्यातवाच्यता ।**

विवरणम्

एवाखण्डस्वीकाराच्चेति भावः । न चैवं सति यागादौ दम्पत्योः व्यासज्यवृत्ति कर्तृत्वमिति मीमांसकसिद्धान्तविरोधः । पतिनिष्ठायाः पत्नीनिष्ठायाश्च यागकृतेः भिन्नभिन्नत्वेन व्यासज्यवृत्तित्वासंभवात् । अनेकनिष्ठस्यैकस्यैव द्वित्वादेः व्यासज्यवृत्तित्वदर्शनात् । कर्तृत्वस्याखण्डत्वे तु उभयनिष्ठं कर्तृत्वमेकमेवेति व्यासज्यवृत्तित्वमुपपद्यते इति वाच्यम् । भिन्नभिन्नाया अपि यागकृतेः प्रकृतयागानुकूलकृतित्वेनानुगतरूपेण व्यासज्यवृत्तित्वसंभवात् । न चायमपसिद्धान्तः, महानसीयत्ववह्नित्वनिष्ठावच्छेदकतयोः संबन्धभेदेन सावच्छिन्नत्वनिरवच्छिन्नत्वभेदेन च भिन्नत्वेऽपि महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वेनानुगतरूपेण व्यासज्यवृत्तित्वं स्वीकृत्य, पर्याप्तिसंबन्धेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य साध्यतावच्छेदके वह्नित्वे भट्टाचार्यैः सिद्धान्तलक्षणे प्रतिपादितत्वात् ॥

क्रियानुकूला कृतिर्नाख्यातार्थः क्रियाया धातुलभ्यत्वादनन्यलभ्यस्यैव शब्दार्थत्वादित्याशयेनाह—**अनुकूलकृतित्वेनेति** ॥

अनुकूलत्वस्यापि संसर्गतया भानसंभवेन आकांक्षालभ्यत्वादाह—**कृतित्वमात्रेण वेति** ॥

ननु कृतित्वावच्छिन्नस्याख्यातवाच्यत्वे रथो गच्छतीति प्रयोगानुपपत्तिः गमनानुकूलकृतेः अचेतने रथे बाधात् । अतः व्यापार एवाख्यातार्थो

23. तस्या एव (ब. कृ.)
24. कृतित्वेन (ब कृ.)

**रथो गच्छति काष्ठं पचतीत्यादौ च क्रियानुकूलव्यापाररूपे कर्तृत्वे निरूढलक्षणा । कृतित्वजातेः प्रवृत्तिनिमित्तत्वे लाघवात् ॥**

विवरणम्

वाच्यः गमनानुकूलव्यापारवत्त्वञ्च रथे अबाधितमिति तत्प्रयोगोपपत्तिरित्यत आह — **रथो गच्छतीति** ॥ निरूढलक्षणा - अनादितात्पर्यविषयीभूतार्थ-निष्ठा लक्षणा ।

शक्यत्वे सति शक्यवृत्तित्वे सति शक्योपस्थितिप्रकारत्वं प्रवृत्ति-निमित्तत्वम् ।

**लाघवादिति** । व्यापारत्वं तु न जातिरिति भावः ।

अत्र "कृतावाख्यातस्य शक्तेः लक्षणायाश्च स्वीकारे कृतित्वजातेरेकस्याः प्रवृत्तिनिमित्तत्वसंभवाल्लाघवमस्ति कृतिविशिष्टे शक्तिस्वीकारे नानाकृति-व्यक्तीनां प्रवृत्तिनिमित्तत्वापत्त्या गौरवं स्यादित्यन्वयः" । (५६० पृ.) इत्यादर्शः । अत्राख्यातस्य किं कृतौ शक्तिरुत कर्तरीति न विचारः येन कृतिविशिष्टे शक्तिकल्पने अनन्तकृतिव्यक्तीनां शक्यतावच्छेदकत्व-कल्पनापेक्षया कृतौ शक्तिकल्पने एकस्याः कृतित्वजातेः तत्त्वकल्पने लाघवमिति वर्णनं उपयुज्येत । परन्तु लकारार्थविचारोपक्रम एव 'गौरवेण विशिष्टधर्मिणि शक्तेर्बाधात्' इति ग्रन्थेन धर्मिणि शक्तिर्निराकृता । कर्तृत्वमर्थः इति च निश्चितम् । तस्य कृतित्वेन वाच्यतायामभिहितायां, रथो गच्छतीत्यत्र बोधानुपपत्त्या व्यापाररूपमेव कर्तृत्वं लकारवाच्यमिति शङ्का जाता । सा च रथो गच्छतीत्यादौ व्यापारे लक्षणा इति ग्रन्थेन समाहिता । तदनन्तरं तादृशप्रयोगाणां मुख्यत्वाय व्यापारे एव शक्तिरस्तु इत्याक्षेपसमाधानाय कृतित्वजातेरित्याद्यभिहितं भट्टाचार्यैः । जन्यत्वादि-घटितस्य व्यापारत्वस्य अखण्डकृतित्वजात्यपेक्षया गुरुत्वेन प्रवृत्तिनिमित्तत्व-कल्पनं न युक्तमिति तदाशयः । अत एवात्र एकस्या इति कृतित्वजाति-

**मीमांसकास्तु — व्यापारत्वेनैव शक्तिः । पचतीत्यादावपि तेनैव रूपेण बोधोपगमात् । एवञ्चाचेतनेऽपि प्रयोगो मुख्य एव ॥**

विवरणम्

विशेषणं नोपात्तं भट्टाचार्यैः । अत एव चानुपदं, उक्तलाघवमुपमर्द्य रथो गच्छतीत्यादीना मुख्यत्वसंपादनाय व्यापारे एव शक्तिः स्वीकर्तव्या इति मीमांसकमतमुपन्यसिष्यन्ति भट्टाचार्याः इति ध्येयम् ।

रथो गच्छतीत्यादिप्रयोगाणा मुख्यत्वनिर्वाहाय व्यापारस्याख्यात-वाच्यत्वं स्वीकुर्वतां मीमांसकानां मतमुपन्यस्यति **मीमांसकास्त्विति** ॥ अस्य व्यवहितेन आहुरित्यनेन संबन्धः ॥

अत्र "अपिशब्दात् पच्यते इत्यादौ तु व्यापारत्वेन रूपेणाख्याता-द्बोधस्योभयसंमतत्वमेवेति व्यज्यते" (५६० पृ) इत्यादर्शः । पूर्वं रथो गच्छतीत्यादौ धात्वर्थानुकूलकृतेर्बाधात् आख्यानाद्व्यापारबोधः । चैत्रः पचतीत्यादौ तु कृतेर्बोधः इत्यभिहितम् । मीमांसकमते तु, न केवलं रथो गच्छतीत्यादौ व्यापारबोधः अपि तु चैत्रः पचतीत्यादावपि व्यापारत्वेन व्यापारबोधः इत्याशयेन पचतीत्यादावपीति अभिहितम् । सति चैवं, अपिशब्दात् पच्यते इत्यादौ आख्यातात् व्यापारत्वेन बोधस्योभय-संमतत्वं व्यज्यते इति व्याख्यानं कथं संगच्छते? पच्यते इत्यत्र धातोः फलावच्छिन्नव्यापारवाचकत्वपक्षे आख्यातेन फलं बोध्यते । फलव्यापारयोः खण्डशः धात्वर्थतापक्षे चाश्रयत्वं बोध्यते इति नैयायिकसिद्धान्तः । कर्माख्यातादव्यापारत्वेन व्यापारबोधः न नैयायिकसिद्धः । अपि चापि-शब्देनायमर्थः कथं व्यज्यते इत्यपि चिन्तनीयम् ॥

**कृतित्वस्य लाघवञ्चाकिञ्चित्करम् । यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादः तत्रैव लघुरूपावच्छिन्ने शक्त्युपगमात्[25] । तथापि तदवच्छिन्ने शक्त्युपगमे तत्रामुख्यार्थेऽनादितात्पर्यकल्पनायां गौरवात् । एवं बीजादिना अङ्कुरः कृतः इत्यादौ विनापि यत्नं कृञः प्रयोगात् तस्यापि व्यापारसामान्यार्थकता । अतः करोति-विवरणीयार्थकत्वेऽपि नाख्यातस्य यत्नत्वावच्छिन्नवाचकता । न वा**

विवरणम्

लाघवस्याकिञ्चित्करत्वमुपपादयति **यत्रेति** । नैयायिकमते गोशब्दात् जात्याकृतिविशिष्टव्यक्तेर्बोधो जायते । तत्र जात्या लघुरूपेण आकृत्या गुरुरूपेण च बोधो निर्विवादः इति अवयवसंयोगरूपाकृत्यपेक्षया लघोरखण्डजातेः शक्यतावच्छेदकत्वं स्वीक्रियते । प्रकृते चाख्यातात् कृतित्वेन बोधः सविवादः इति लाघवमप्रयोजकमित्यर्थः ॥

अमुख्यार्थे = व्यापारे ।

**अनादीति** ॥ अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति भावः ।

ननु पचतीत्यस्य पाकं करोति इति वाक्येन विवरणात् कृतिवाचककरोतिना विव्रियमाणार्थकत्वादाख्यातस्य यत्नार्थकत्वमावश्यकम् । एवं किं करोति इति प्रश्ने पचति इत्युत्तरदानादपि आख्यातस्य करोति-समानार्थकत्वमित्याशङ्कायां, करोतेः न यत्नार्थकत्वं अपि तु व्यापारार्थकत्व-मेवेति करोतिना विव्रियमाणस्याख्यातस्यापि व्यापारार्थकत्वमेवेत्याह— **एवमिति** ॥ यद्यपि उदयनाचार्यैः कृताकृतविभागेन इत्यादिना, बीजादिना

25. प्रकृते च कृतित्वेन बोधस्य सविवादत्वात् (ब. कृ.)

**किं करोति? पचति इति प्रश्नोत्तरयोः समानप्रकारकबोधजनकत्वानुरोधेन तथात्वम् ।**

**अत्र केचित्—पचति इति वाक्यजन्यबोधे सति यत्नत्वावच्छिन्ने वर्तमानत्वसंशयानुदयात् तत्र यत्नत्वावच्छिन्ने वर्तमानत्वबोधकत्वसिद्धौ तदवच्छिन्ने शक्तिः लाघवात् सिद्ध्यति ॥**

**न हि यत्नाविनाभूतक्रियाविशेषलिङ्गकानुमानलभ्येन यत्नत्वावच्छिन्नेन समं वर्तमानत्वान्वयबोधकत्वमाख्यातस्य अर्थाध्याहारमतेऽपि**

विवरणम्

अङ्कुरः कृतः इति स्वारसिकः प्रयोगो नास्ति अतः करोतेर्यत्नार्थकत्वमित्यभिहितम् । तथापि रथो गच्छतीत्यादिरिव बीजादिना अङ्कुरः कृतः इति प्रयोगोऽपि स्वारसिकः इति मीमांसका मन्यन्ते इति बोध्यम् ।

दूषयितुं नैयायिकमतमनुवदति मीमांसकः **अत्र केचिदिति** ॥ नैयायिका इत्यर्थः ।

ननु यत्नस्याख्यातावाच्यत्वेऽपि पचतीत्यतः वर्तमानपाकयत्नबोधः संभवति । धात्वर्थपाककारणत्वेनानुमिते यत्ने लडर्थवर्तमानत्वान्वयसंभवात् । न च पदादनुपस्थितस्य यत्नस्य शाब्दबोधे भानं न संभवतीति वाच्यम् । नैयायिकमते तदसंभवेऽपि अर्थाध्याहारवादिनां मीमांसकानां मते तत्संभवादित्यत आह — **न हीति** ॥

अर्थस्याध्याहारः—अनुसन्धानम् ।

संभवति— [26] लडादिजन्यवर्तमानत्वान्वयबोधे [27] लडादितत्समभिव्याहृतधात्वन्यतरजन्यविशेष्योपस्थितेः कारणताया आवश्यकत्वात् । अन्यथा निराकांक्षयत्नादिपदमात्राद्यत्नाद्युपस्थितावपि तत्र वर्तमानत्वादेर्लडादितो बोधप्रसङ्गात् ॥

न चार्थाध्याहारवादिनां द्वारं पिधानं कृतिः इत्यादितो [28] द्वारकर्मकपिधानकृतेरिव पचति यत्नः इत्यादितः पाकयत्नो वर्तमानः इत्याद्याकारको वर्तमानत्वादेर्बोध इष्ट एवेति वाच्यम् । परस्परसाकांक्षपदार्थद्वयान्वयबोध एवाध्याहृतस्येव निराकांक्षपदादुपस्थितस्यार्थस्य विषयतायास्तैरुपगमात्, तत्रान्वयानुभावकसाकांक्षपदसत्त्वात् ।

विवरणम्

**लडादितत्समभिव्याहृतधात्वन्यतरेति** ॥ पचतीत्यादौ लकारार्थे यत्ने लडर्थवर्तमानत्वान्वयः, जानातीत्यादौ धात्वर्थे ज्ञानादौ तदन्वयः इत्यन्यतरेत्युक्तम् ।

**निराकांक्षपदादिति** ॥ पचति यत्नः इत्यतः पाकयत्नो वर्तमानः इति बोधापत्तिरिति भावः ।

"आख्यातार्थवर्तमानत्वान्वयं प्रति लडादिजन्या लडादिसमभिव्याहृतधातुजन्या वा या विशेष्यस्य यत्नस्य उपस्थितिः तस्याः कारणत्वमावश्यकम् । तथा च पचतीत्यत्र लडुपस्थितवर्तमानत्वस्य लडुपस्थितयत्ने अन्वयः । करोतीत्यत्र लडुपस्थितवर्तमानत्वस्य धातूपस्थितयत्ने अन्वयः ।" (५६१ पृ.) इत्यादर्शः । लडर्थवर्तमानत्वान्वयी न सर्वत्र यत्नः । अपि तु पचतीत्यादौ लकारार्थयत्नः, रथो गच्छतीत्यादौ तदर्थव्यापारः,

26. लडादिकृत (ब. कृ.)

27. लडादिसमभिव्याहृत (ब कृ.)

28. द्वारकर्मककृतेरिव (ब. कृ. आ.)

**प्रकृते चान्वयबोधस्याकांक्षानुपयोगिपदार्थद्वयाविषयकत्वेन[29] तेषामप्यसंमतत्वात् । तत्स्वीकारे निराकांक्षस्याप्यनुभावकत्वस्वीकारापत्तेः शाब्दबोधे आकांक्षानुपयोगप्रसङ्गाच्चेति । तन्न–तत्र[30] तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्तमानत्वानुमितेरेवोपगमात् । तादृशवर्तमानत्वप्रतीतौ शाब्दत्वप्रतीतेः सविवादत्वादित्याहुः ॥**

विवरणम्

नश्यतीत्यादौ धात्वर्थकोटिप्रविष्टा उत्पत्तिः, जानाति इच्छतीत्यादौ धात्वर्थज्ञानादिः । अतः नानया फक्किकया वर्तमानत्वान्वयी यत्न एवेति मन्तव्यम् ।

**प्रकृते चेति** । यत्र पदार्थद्वयान्वयबोधौपयिकाकांक्षा वर्तते तत्र तद्वाक्यजन्यबोधे मानान्तरेणोपस्थितः निराकांक्षपदेनोपस्थितश्चार्थः भासते । पचति यत्नः इत्यत्र पचधातुयत्नपदसमभिव्याहारस्य पाकयत्नबोधौपयिकाकांक्षात्वाभावेन, साकांक्षपदाभावात् निरुक्तवाक्यात् पाकयत्नो वर्तमान इति बोधः अर्थाध्याहारवादिनामपि नेष्ट इति भावः ।

**तात्पर्यलिङ्गेनेति** । एवञ्च पचतीत्यतः व्यापारविषयकशाब्दबोधे जाते क्रियाविशेषेण यत्नानुमितिः ततो यत्ने वर्तमानत्वानुमितिः तयैव यत्ने वर्तमानत्वसंशयप्रतिरोधः इति भावः ।

अत्र "शाब्दत्वप्रतीतेरित्यत्र शाब्दप्रतीतित्वस्येत्येवं युक्तः पाठः" (५६३ पृ.) इत्यादर्शः । यत्नत्वावच्छिन्ने वर्तमानत्वानुमितेरेवोपगमादिति

29. पदार्थान्वयविषयकत्वेन (ब.-कृ.)
30. तत्र इति नास्ति (ब. कृ.)

**अत्र नैयायिकाः — रथो गच्छतीत्यादावाश्रयत्वमेवाख्यातार्थो न तु व्यापारः अन्यदीयगमनानुकूलनोदनादिलक्षणव्यापारवति[31] गच्छतीत्यप्रयोगात्। एवञ्च काष्ठं पचतीत्यादिप्रयोग एव व्यापार-शक्तिमाख्यातस्य साधयेद्यदि स्वारसिकः स्यात्। तदेव न। न हि चैत्रः पचतीत्यादिप्रयोगेण काष्ठं पचतीत्यादिप्रयोगस्याविशेषः।**

विवरणम्

पूर्वग्रन्थे एवकारेण तादृशशाब्दबोधो निरस्तः। ततः, यत्ने वर्तमानत्वं शाब्दयामीति अनुव्यवसायसत्त्वेन सा प्रतीतिः शाब्दी इत्याशङ्कायामयं ग्रन्थः प्रवृत्तः। यत्ने वर्तमानत्वावगाहिबुद्धौ शाब्दत्वावगाहिन्याः पूर्वोक्तानुव्यवसायात्मिकायाः प्रतीतेः सर्वानुभवसिद्धत्वविरहेण न तया शाब्दत्वं सिद्ध्यति इति तदाशयः। एवं शाब्दत्वप्रतीतेरिति पाठस्य संगतत्वे तस्यायुक्तत्वं कथमिति चिन्तनीयम्।

मीमांसकोक्तं आख्यातस्य व्यापारवाचित्वं निराकृत्य तस्य यत्नत्वविशिष्टवाचकतां व्यवस्थापयति **अत्र नैयायिका इति**।

रथो गच्छतीति प्रयोगस्य आख्याते व्यापारवाचकत्वसाधकतां निराकरोति **रथो गच्छतीति**।

एवञ्च—रथो गच्छतीत्यत्र आख्यातस्य व्यापारार्थकत्वाभावेन तत्प्रयोगस्य आख्याते व्यापारशक्तिव्यवस्थापकत्वाभावे च।

अविशेषः — स्वारसिकत्वेनाभेदः।

31. नोदनादिविलक्षण (ब.-कृ.)

**एवमचेतने स्वरसतः कर्तृपदाप्रयोगात् कृञोऽपि यत्नत्वविशिष्टोऽर्थः । एवं चैत्र एव पचति पाककर्ता नत्वचेतनं काष्ठादि इत्यादिप्रयोगात् लकारस्य कृञश्च[32] यत्नत्वविशिष्टार्थकताया आवश्यकत्वात् लाघवात्तत्रैव शक्तिः । व्यापारे लक्षणेति ॥**

विवरणम्

आख्यातस्य व्यापारवाचकत्वे युक्तिं दूषयित्वा, करोतिविक्रियमाणार्थकत्वादाख्यातस्य यत्नवाचकत्वं साधयितुं करोतेः यत्नार्थकत्वं व्यवस्थापयति **एवमिति** ।

लकारस्यापि यत्नत्वविशिष्टवाचकत्वमेव न व्यापारवाचकत्वमित्यत्र साधकं प्रयोगमाह — **एवमिति** । अङ्कुरादौ प्रयत्नपूर्वकत्वप्रतिसन्धानाभावात् कृतः इति व्यवहारो नास्त्येव । स्पष्टश्चायमर्थो न्यायकुसुमाञ्जलौ 'कृताकृतविभागेन कर्तृरूपव्यवस्थया' इति कारिकाविवरणे । यद्यस्ति क्वचित् बीजादिना अङ्कुरः कृतः इति व्यवहारः तदा न स स्वारसिक इति न तेन करोतेः व्यापारार्थकत्वं सिद्ध्यतीति बोध्यम् ।

**कृञश्च यत्नत्वविशिष्टार्थकताया आवश्यकत्वादिति** ॥ न च यतेरिव कृञः केवलयत्नार्थकत्वे फलावच्छिन्नव्यापारावाचकतया सकर्मकत्वं न स्यादिति वाच्यम् । सविषयार्थबोधकानां जानातिकरोतिप्रभृतीनां सकर्मकत्वव्यवहारो भाक्तः । तेषां गौणं सकर्मकत्वम् । घटादीनां विषयत्वरूपं तत्कर्मत्वमपि गौणमेव । न च तत्र कर्मत्वस्य गौणत्वेऽपि क्रियते घटः इत्यादौ कर्मणि लकारो न स्यात् गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः इति न्यायेन

32. कृञश्च इति नास्ति (ब.-कृ.)

विवरणम्

गौणकर्मणि लःकर्मणीति सूत्राप्रवृत्तेरिति वाच्यम् । विशिष्यार्थोपस्थापक-विशिष्टरूपोपादानपुरस्सरं यत्र पदकार्यं विधीयते तत्रैव गौणमुख्यन्यायः प्रवर्तते इति वैयाकरणैः स्थापितत्वात् आन्महतस्समानाधिकरणजातीययोः इत्यादावेव स न्यायः प्रवर्तते न तु लःकर्मणि, कर्मणि द्वितीया इत्यादौ । एवञ्च करोतिसमभिव्याहारे न कर्मणि लकाराद्यनुपपत्तिः । यदि द्वितीयान्तपदसाकांक्षधातुत्वं, द्वितीयार्थान्वितस्वार्थबोधकत्वं, अविवक्षाविरह-विशिष्टकर्माकांक्षधातुत्वं वा सकर्मकत्वमित्युच्यते । तदा कृञः मुख्यमेव सकर्मकत्वं संभवतीति बोध्यम् ।

न च तथापि क्रियते घटः स्वयमेवेति प्रयोगो न स्यात् क्रियायाः कर्मनिष्ठत्वे एव कर्मवत्कर्मणा तुल्याक्रियः इति सूत्रेण कर्मवद्भावसंभवात् यत्नस्य च कर्मनिष्ठत्वाभावादिति वाच्यम् । यत्नस्य समवायेन कर्मनिष्ठत्वाभावेऽपि विषयतासंबन्धेन कर्मनिष्ठत्वेन कर्मवद्भावोपपत्तेः । न चैवं सति दर्शनस्यापि विषयतासंबन्धेन कर्मनिष्ठत्वात् दृशेरपि कर्मस्थक्रियत्वात् कर्मवद्भावापत्त्या दृश्यते घटः स्वयमेव इति प्रयोगापत्तिरिति वाच्यम् । जानातेः आवरणभङ्गानुकूल-व्यापारार्थकत्वं स्वीकुर्वद्भिः वैयाकरणैः —

"निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते ।
न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः ॥"

इति सिद्धान्ताश्रयणेनैव दृश्यते घटः स्वयमेवेति प्रयोगो वार्यते । तयैव रीत्या अस्माभिरपि, घटादिनिष्ठस्य कृतिकर्मत्वस्य निर्वर्त्यकर्मत्वरूपत्वात्

**न च यत्नत्वस्याख्याताबाच्यनिवृत्तिजीवनयोनियत्नसाधारणतया लकारशक्यतावच्छेदकत्वासंभव इति वाच्यम् ।**

विवरणम्

दृशिकर्मत्वस्य प्राप्यकर्मत्वरूपत्वाच्च क्रियते घटः स्वयमेवेति प्रयोगस्य, दृश्यते घटः स्वयमेवेति प्रयोगाभावस्य चोपपत्तेर्वक्तुं शक्यत्वात् ।

यदि च कर्ममात्रवृत्तिफलार्थकत्वमेव कर्मस्थक्रियत्वं तदेव कर्मवद्भावप्रयोजकम् । अत एव आवरणभङ्गानुकूलव्यापारः न जानातेरर्थः । तथा सति आवरणभङ्गस्य फलस्य कर्ममात्रनिष्ठत्वेन कर्मस्थक्रियत्वात् जानातेः कर्मवद्भावापत्त्या ज्ञायते घटः स्वयमेवेति प्रयोगापत्तेः । अपि तु ज्ञानानुकूलव्यापार एव । फलस्य ज्ञानस्य समवायेन कर्तरि, विषयतया कर्मणि च वृत्तेः कर्ममात्रवृत्तिफलार्थकत्वरूपं कर्मस्थक्रियत्वं जानातेर्नास्तीति न कर्मवद्भावापत्तिरिति नव्यवैयाकरणा वदन्ति । एवञ्च विषयतासंबन्धेन कर्मनिष्ठस्य कृञर्थस्य यत्नस्य समवायेन कर्तृनिष्ठत्वात् कर्ममात्रवृत्तिफलार्थकत्वरूपस्य कर्मस्थक्रियत्वस्य कृञ्धातौ विरहेण कर्मवद्भावानुपपत्त्या क्रियते घटः स्वयमेवेति प्रयोगो न स्यादिति मन्यते । तदा क्रियते घटः स्वयमेवेत्यत्र कृञ्धातोः उत्पत्त्यवच्छिन्ने यत्ने लक्षणा स्वीक्रियते । तथाचोत्पत्तिरूपफलस्य कर्ममात्रनिष्ठत्वात् तत्र करोतेः कर्मस्थक्रियत्वात् कर्मवद्भाव उपपद्यते । नैतावता सर्वत्र करोतेः फलव्यापारोभयबोधकत्वं कल्पनीयं प्रमाणाभावात् । घटं करोतीत्यादावुत्पत्तिप्रतीतेरननुभवाच्चेति बोध्यम् ।

**शक्यतावच्छेदकत्वासंभव इति** । शक्यतानतिप्रसक्तस्यैव शक्यतावच्छेदकत्वादिति भावः ।

**निवृत्त्यादियत्नस्याख्यातवाच्यतोपगमे क्षतिविरहात्, निवृत्त्यादेः पाकानुकूलताविरहेण तत्काले पचतीति प्रयोगापत्तिविरहात् ।**

विवरणम्

तत्काले—पाकनिवृत्तिकाले ।

अत्र " **निवृत्त्यादीति,** न पचतीत्यादौ निवृत्त्यनुकूलः जीवतीत्यादौ जीवनानुकूलोऽपि यत्नः प्रतीयत एवाख्यातेनेत्यर्थः । ननु यदि निवृत्त्यनुकूलोऽपि यत्न आख्यातार्थः तदा पाकनिवृत्तिकाले पचतीति प्रयोगः कथं न स्यादित्याशङ्क्याह— **निवृत्त्यादेरिति ।**" (५६४-पृ) इत्यादर्शः ॥ न पचतीत्यत्र निवृत्त्यनुकूलयत्नबोधः इत्ययमपसिद्धान्तः । तत्र पाककृत्यभावस्यैव नञा प्रथमान्तपदार्थे बोधनात् । अपि च निवृत्तियत्नस्याख्यातवाच्यत्वं मूले अभिहितम् । तदुदाहरणत्वेन तदभिमते न पचतीत्यत्र तु निवृत्त्यनुकूलयत्नबोधः इत्युक्तिः न समञ्जसा । किञ्च निवृत्तेर्यत्नविशेषत्वात्तदनुकूलयत्नः न संभवति । यत्ने यत्नसाध्यत्वबाधात् । अत एव कुर्यादित्यत्र बाधात् लिङर्थस्य कृतिसाध्यत्वस्य धात्वर्थकृतौ न बोध इति वदन्ति ॥ परन्तु **निवृत्त्यादियत्नानामपि आख्यातवाच्यत्वस्वीकारेण** यत्नत्वस्यानतिप्रसक्तस्य शक्यतावच्छेदकत्वे उपपादिते, पाकविषयकनिवृत्तियत्नकाले पचतीति प्रयोगापत्तिः पाकविषयकयत्नस्य निवृत्तेः सत्त्वादित्याशङ्कायामाह—**निवृत्त्यादेरिति ।** इत्थञ्च धात्वर्थस्य आख्यातार्थे यत्ने न केवलं विषयत्वं संबन्धः अपि त्वनुकूलत्वमपीति निवृत्तौ धात्वर्थपाकानुकूलत्वस्य बाधात् न तादृशप्रयोगापत्तिरिति भावः ।

**इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातेरेव[33] वा आख्यात-पदप्रवृत्तिनिमित्तत्वमुपगम्यते ॥**

**अत एवेश्वरकृतेर्जन्यमात्रजनकत्वेऽपि ईश्वरः पचति ईश्वरो भुङ्क्ते इत्यादयो न प्रयोगाः । न चैवं ईश्वरो वेदं वक्ति, मथुरायां कृष्णो विहरति, इत्यादिप्रयोगानुपपत्तिः । अत्राख्यातस्य लक्ष्यार्थ-**

विवरणम्

कदाप्याख्यताधीनबोधाविषयनिवृत्त्यादियत्नानामाख्यातवाच्यत्व-स्वीकारो व्यर्थः इत्याशयेनाह—**इष्टसाधनताज्ञानेति** ।

प्रवृत्तित्वं जातिरेव आख्यातशक्यतावच्छेदिका । सा च जातिः इष्टसाधनताज्ञानजन्यतावच्छेदकतया सिद्ध्यति इति भावः । चैत्रो निश्वसिति इत्यादौ निश्वासाश्रयत्वमेव प्रतीयते । तेन निश्वासानुकूल-जीवनयोनियत्नस्य प्रवृत्तित्वानाक्रान्तत्वेऽपि न क्षतिरिति बोध्यम् ।

**न प्रयोगा इति ॥** नित्यायामीश्वरकृतौ इष्टसाधनताज्ञान-जन्यतावच्छेदकप्रवृत्तित्वजातेरसत्त्वादिति भावः ।

**प्रयोगानुपपत्तिरिति** ॥ ईश्वरकृतेराख्यातावाच्यत्वादिति भावः ।

33. जातेरेवाख्यातपदप्रवृत्तिनिमित्तत्वोपगमाद्वा (ब.)
आख्यातपदे प्रवृत्तिनिमित्तत्वोपगमाद्वा (कृ.)

**व्यापारबोधकतोपगमात् । ईश्वरकृतिसाधारणधर्मस्याख्यातप्रवृत्ति-निमित्तत्वेऽपि तत्र व्यापारलक्षणाया आवश्यकत्वात् । तथा हि— आत्मा पचति शरीरं पचति इत्यादिस्वारसिकप्रयोगाविरहादाख्यातार्थ-कृतेरुद्देश्यतावच्छेदकशरीरविशेषावच्छेदेन समवायेनान्वयनियमः स्वी-करणीयः। चैत्रादिपदस्य शरीरविशेषविशिष्टात्मपरतया चैत्रः पचतीत्यादौ शरीरविशेषात्मकोद्देश्यतावच्छेदकावच्छेदेनात्मनि समवायेनान्वय-**

विवरणम्

नन्वत्र कल्पे ईश्वरो वेदं वक्ति इत्यादौ आख्यातस्य लक्षणा-कल्पनया गौरवमित्यत आह—**ईश्वरकृतीति** ॥

साधारणधर्मः—यत्नत्वम् ।

तत्र — ईश्वरो वेदं वक्ति इत्यत्राख्याते ।

**आवश्यकत्वादिति** ॥ तथा च तादृशगौरवमुभयोस्तुल्यमिति नान्यतरस्मिन्पक्षे चोदनीयमिति भावः ।

**स्वीकरणीय इति** ॥ आख्यातार्थकृतेः अवच्छेदकतासंबन्धेन शरीरेऽन्वयतात्पर्येण शरीरं पचतीति प्रयोगाभावेन समवायेनान्वयनियमः, आत्मपदोपस्थापिते समवायेनान्वयतात्पर्येण आत्मा पचतीति प्रयोगाभावेन शरीरविशेषावच्छेदेनान्वयनियमः स्वीकरणीय इत्यर्थः ।

नन्वेवं चैत्रः पचतीत्यत्राख्यातात्कृतिबोधो न स्यात् चैत्रत्वजातेः शरीरधर्मत्वाच्चैत्रपदार्थे तादृशजात्यवच्छिन्ने समवायेन कृतेरन्वयस्यासंभवा-दित्यत आह— **चैत्रादिपदस्येति** ।

संभवात् । गौरः पचतीत्यादावपि गौरादिपदस्य गौरशरीराद्यवच्छिन्नात्मनि आख्यातस्यैव वा व्यापारे लक्षणोपगमात् । एवञ्चेश्वरकृतेः शरीरानवच्छिन्नत्वादुक्तस्थले कृतेस्तथान्वयासंभव इति व्यापारलक्षणा आवश्यकी ॥

ईश्वरकृतिसाधारणयत्नत्वावच्छिन्न[34] एवाख्यातार्थः। असाधारणानुकूलत्वं हि[35] यत्ने क्रियायाः संबन्धतया भासते न त्वनुकूलता-

विवरणम्

आखयातस्यैव वेति ॥ अत्र पक्षे गौरपदं गौरत्वविशिष्टशरीरपरम् ।

व्यापारे लक्षणोपगमादिति । कृतेरेव शरीरविशेषावच्छेदेनान्वयः न व्यापारस्येति भावः ।

उक्तस्थले — ईश्वरो वेदं वक्ति इत्यत्र ।

"अत्रेति, ईश्वरव्यापारस्येष्टसाधनताज्ञानजन्यत्वादत्र च आख्यातस्य लक्षणया व्यापारमात्रबोधकत्वान्न प्रयोगानुपपत्तिरिति भावः" (५६४-पृ) इत्यादर्शः । आख्यातशक्यतावच्छेदकं प्रवृत्तित्वं इष्टसाधनताज्ञानजन्यतावच्छेदकमित्यभिहितम् । न तु लक्ष्यस्य व्यापारस्यापि इष्टसाधनताज्ञानजन्यत्वम् । अतश्चेश्वरव्यापारस्य इष्टसाधनताज्ञानजन्यत्वोपपादनमनावश्यकं बोध्यम् । परन्तु प्रकृते वेदवचनानुकूलव्यापारवानिति बोध इति सारम् ।

आख्यातस्य यत्नत्वावच्छिन्ने शक्तिं स्वीकृत्य, विनैव लक्षणां ईश्वरो वेदं वक्तीति प्रयोगमुपपादयतां मतमाह — **ईश्वरकृतिसाधारणेति** ।

34. एव वा (का.-आ.)
35. हि, नास्ति (ब.-कृ.)

**मात्रम् । असाधारणानुकूलताया एवाकांक्षानिरूपकत्वोपगमात् । अतोऽस्मदादिकर्तृकपाकादिक्रियानुकूलकृतिमादाय न ईश्वरः पचतीति प्रयोगः । वेदवचनादौ चेश्वरकृतेरेवासाधारणकारणत्वात् ईश्वरो वेदं वक्ति इत्यादयः प्रयोगाः इत्यपि केचित् ॥**

**अथ कृतेराख्यातस्य कृञश्च वाच्यत्वे करोतीत्यादौ कृतेः द्विधा भानं स्यात् धातुप्रत्यययोर्द्वयोः कृतिबोधकत्वादिति चेत् । न--एकः, द्वौ इत्यादावेकत्वद्वित्वादिबोधकप्रकृतिप्रत्ययोभयसत्त्वेऽप्येकधैवैकत्वादि—धीवत् प्रकृतेऽपि बाधकाभावात्, तत्र विभक्तेः साधुत्वार्थकत्वे प्रकृतेऽपि[36] तथात्वात् ॥**

विवरणम्

आकांक्षानिरूपकत्वोपगमात् —पचधातुतिङ्समभिव्याहाररूपाकांक्षाभास्यत्वोपगमात् ।

**केचिदित्यनेनास्वरसः** सूचितः । तद्बीजन्तु, उद्देश्यतावच्छेदकशरीरविशेषावच्छेदेनैव आख्यातार्थकृत्यन्वयस्य व्युत्पन्नत्वात् अनवच्छिन्नाया ईश्वरकृतेः तथान्वयासंभवेन ईश्वरो वेदं वक्तीत्यादावाख्यातस्य व्यापारे लक्षणाकल्पनमावश्यकमिति नात्र पक्षे लाघवम् । असाधारणानुकूलत्वत्वेन संबन्धत्वे विवादश्चेति ।

**एकधैवेति** । उद्देश्यतावच्छेदकविधेययोरैक्येन एकत्वादिविशिष्टे एकत्वाद्यन्वयबोधस्याव्युत्पन्नत्वादिति भावः ।

प्रकृतेऽपि—करोतीत्यत्रापि । उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन कृतित्वविशिष्टे कृत्यभेदान्वयस्य कृतिविषयकत्वस्य कृतौ बाधेन भेदान्वयस्य चासंभवेन एकधा कृतिबोधे इति शेषः ।

तत्र—एकः, द्वौ इत्यादौ ।

तथात्वात्—साधुत्वार्थकत्वात् ।

36. अत्रापि (ब.) साधुत्वार्थकत्वेऽपि तथात्वात् (कृ.)

अथ तर्हि करोति चैत्रः इत्यादौ प्रातिपदिकार्थे साक्षादेव कृत्यन्वयः स्यात् । स च नामार्थधात्वर्थयोः भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् न[37] संभवति नामार्थधात्वर्थयोः साक्षादन्वयोपगमे कर्मतादिबोधकाविभक्तेरसत्त्वेऽपि तण्डुलः पचतीत्यादौ कर्मतादिसंबन्धेन तण्डुलादेः पाकादावन्वयसंभवेन तादृशवाक्यात् तण्डुलकर्मकपाकादिबोधापत्तेः ।

न च प्रातिपदिकार्थप्रकारकक्रियान्वयबोध एवाव्युत्पन्नो न तु क्रियाप्रकारकप्रातिपदिकार्थविशेष्यकबोधोऽपीति वाच्यम् । घटः करोतीत्यादितः कर्मतादिसंबन्धेन कृत्यादेर्घटादावन्वयाभावात् क्रियाप्रकारकनामार्थविषयकबोधस्याव्युत्पन्नत्वादिति चेत् ॥

न—उक्तातिप्रसङ्गवारणाय धातोः कर्मतादिसंबन्धेन क्रियान्वयाबोधकत्वव्युत्पत्तेरुपगमात् नत्वाश्रयतासंबन्धेन कृत्यादिरूपक्रियान्वयाबोधकत्वव्युत्पत्तेरित्यदोषात् ।

विवरणम्

तर्हि—करोतीत्यादावाख्यातस्य साधुत्वमात्रार्थकत्वे ।

साक्षादेव—प्रत्ययार्थमद्वारीकृत्यैव ।

**नामार्थधात्वर्थयोरिति** ॥ भेदेनेति शेषः । अभेदान्यसंबन्धेनेति तदर्थः ।

**नामार्थविषयकेति** ॥ नामार्थविशेष्यकेत्यर्थः ।

उक्तातिप्रसङ्गवारणाय — घटः करोतीत्यादितः धात्वर्थकृतिप्रकारककर्मतासंसर्गकघटविशेष्यकबोधप्रसङ्गवारणाय ।

37. तथा न संभवति (ब.-कृ.)

**न च तादृशातिप्रसङ्गवारणाय धातुजन्यकृत्यादिप्रकारकान्वयबोधे प्रत्ययजन्यविशेष्योपस्थितेर्हेतुता वाच्या । तादृशकारणाभावात् प्रातिपदिकार्थविशेष्यकबोधोऽपि न संभवतीति वाच्यम् । कर्मत्वादिसंबन्धेन कृत्यादिप्रकारकबोधस्याप्रसिद्ध्या सामग्र्यकल्पनेनापादकाभावात् तादृशकारणताया अकल्पनात् । न च क्रियते चैत्रः इत्यादौ [38] कृत्यादिप्रकारकान्वयबोधवारणायैवोक्तकारणताकल्पनमावश्यकमिति वाच्यम् । सति तात्पर्ये इष्टत्वात् । कर्तृविशेष्यकान्वयबोधपरधातूत्तरयकः असाधुत्वादेव[39] प्रामाणिकानां न तथा प्रयोगः ।**

विवरणम्

**तादृशकारणाभावादिति** ॥ चैत्रादेः प्रातिपदिकार्थस्य प्रत्ययानुपस्थाप्यत्वादिति भावः ।

**आपादकाभावादिति** ॥ घटः करोतीत्यत्र धात्वर्थकृतिप्रकारककर्मतासंसर्गकघटविशेष्यकबोधापादनासंभवादिति शेषः ।

आश्रयतासंबन्धेन कृतिप्रकारकबोधस्य प्रसिद्धत्वात् तदापत्तिवारकतया निरुक्तकारणताकल्पनं शङ्कते **न चेति ।**

**इष्टत्वादिति ॥** क्रियते चैत्रः इत्यतः कृतिप्रकारकचैत्रविशेष्यकबोधस्येत्यादिः ।

ननु तर्हि प्रामाणिकानां तथा तात्पर्येण क्रियते चैत्रः इति प्रयोगापत्तिरित्यत आह—**कर्तृविशेष्यकेति** ।

**असाधुत्वादिति** ॥ कर्तरि शप् इत्यपवादविषयतया यकः असाधुत्वम् ।

38. कृतिप्रकारकबोध (ब.-कृ.)
39. असाधुत्वाच्च (ब.-कृ.)

**करणं चैत्रः इत्यादौ चैत्रादौ धात्वर्थकृतेराश्रयतासंबन्धेनान्वयबोधवारणाय तादृशकार्यकारणभावकल्पनमित्यपि न । तादृशान्वयबोधे [40]आख्यातान्तधातुनामसमभिव्याहारज्ञानहेतुतयैवोक्तस्थले तादृशबोधवारणसंभवात् ॥**

**दीधितिकृतस्तु गच्छति जानाति करोति इत्यादावाख्यातस्याश्रयत्वे निरूढलक्षणायाः स्वीकारान्न नामार्थे क्रियायाः साक्षादन्वयः इत्याहुः ॥**

विवरणम्

उक्तस्थले — करणं चैत्रः इत्यादौ ।

धातुत्वप्रत्ययत्वादीनामनुगताननतिप्रसक्तानां दुर्वचतया प्रत्ययजन्यविशेष्योपस्थितित्वेन कारणताकल्पनं न संभवति इति प्रथमाविचारोक्तरीतिरप्यनुसन्धेया ।

शिष्यव्युत्पादनाय साक्षेपनिरासं करोति चैत्रः इत्यत्र मणिकारसंमतं आश्रयतासंसर्गकं बोधमुपपाद्य, प्रथमाविचारोक्तयुक्त्यनुवादपुरस्सरं आश्रयत्वप्रकारकबोधे अधिकयुक्तीः विवक्षुः दीधितिकृन्मतमुपन्यस्यति **दीधितिकृतस्त्विति** ।

**गच्छतीति** ॥ रथो गच्छतीत्यत्र नियमेनाख्यातस्याश्रयत्वबोधकत्वम् । चैत्रो गच्छतीत्यादौ यदा चैत्रशब्दः चैत्रत्वजात्यवच्छिन्नशरीरपरः तदा आश्रयत्वस्य, यदा च चैत्रशरीरावच्छिन्नात्मपरः तदा कृतेश्च बोधकमाख्यातमिति बोध्यम् ।

40. धातुना समभिव्याहार (ब.-कृ.)

**तन्मते यद्यप्याश्रयत्वसंबन्धस्याधिकस्य जानाति चैत्रः इत्यादिवाक्यजन्यबोधविषयताकल्पनेन गौरवम् । तथापि यत्र [41] ज्ञाधातोर्ज्ञानाश्रयत्वे लक्षणाग्रहः शक्तिभ्रमो वा तत्र चैत्रादिविशेष्यकः ज्ञानाद्याश्रयत्वप्रकारको बोधः आश्रयतायाः संसर्गतावादिनामप्यनुमतः। चैत्रादिविशेष्यकाश्रयतासंसर्गकज्ञानादिप्रकारकशाब्दबोधस्तु दीधितिकारमते क्वचिदपि न प्रसिद्ध्यतीति तादृशशाब्दबोधे योग्यताज्ञानादेः हेतुताकल्पनं तथाविधशाब्दबोधाङ्गीकर्तुर्मणिकारस्य मते आवश्यकमिति गौरवम् ॥**

विवरणम्

आश्रयत्वसंबन्धस्य — आश्रयत्वीयसंबन्धस्य । निरूपितत्वस्वरूपसंबन्धयोरिति यावत् ।

**अनुमत इति** ॥ आश्रयत्वविशेषणतयोपस्थितस्य ज्ञानस्य प्रातिपदिकार्थे आश्रयतासंबन्धेनान्वयस्य, एकत्र विशेषणत्वेनोपस्थितस्य अन्यत्र विशेषणतया नान्वयः इति व्युत्पत्तिविरोधेन स्वीकर्तुमशक्यत्वादिति भावः ।

तादृशशाब्दबोधे—ज्ञानाश्रयत्वप्रकारकबोधे ।

तथाविधशाब्दबोधाङ्गीकर्तुः—आश्रयतासंसर्गकबोधाङ्गीकर्तुः ।

**गौरवमिति** ॥ द्विविधबोधे द्विविधयोग्यताज्ञानहेतुतयोः कल्पनया गौरवमित्यर्थः ।

41. धातोः (ब.-कृ.)

**वस्तुतस्तु चैत्रेण ज्ञायते घटः इत्यादौ कर्मप्रत्ययस्थले यावतां पदार्थानां प्रकारता तावतां चैत्रो जानाति घटमित्यादि कर्तृप्रत्ययस्थले तथात्वम् । परन्तु विशेष्यविशेषणभाववैपरीत्यम् । एवं कर्मप्रत्ययस्थले यस्य ससंबन्धिकपदार्थस्य यदंशे विशेष्यता कर्तृप्रत्ययस्थले तन्निरूपकतायास्तदंशे प्रकारता इत्यनुभवस्य दुरपह्नवत्वाभिप्रायेणाश्रयत्वस्याख्यातार्थतां दीधितिकार उररीचकार । चैत्रेण ज्ञायते इत्यत्राधेयत्वरूपतृतीयार्थस्य चैत्रविशेष्यत्वात् चैत्रो जानातीत्यत्राधेयतानिरूपकत्वरूपाधारतायाश्चैत्रांशेऽप्रकारत्वे तादृशानुभवविरोधात् ॥**

विवरणम्

ज्ञाधातुसमभिव्याहृतस्याख्यातस्य आश्रयत्वे शक्तिभ्रमः लक्षणाग्रहो वा यत्र तत्रैव, ज्ञाधातोः ज्ञानाश्रयत्वे शक्तिभ्रमलक्षणाग्रहयोरन्यतरसत्त्वेऽपि एकत्र विशेषणतयेत्यादिव्युत्पत्तिमपि संकोच्य, जानातीत्यतः आश्रयतासंसर्गक एव बोधः स्वीक्रियते न तु आश्रयत्वप्रकारक इति यद्यनुभवापह्नवः क्रियते । तदा न मणिकृन्मते द्विविधशाब्दबोधे द्विविधयोग्यताज्ञानहेतुताकल्पनागौरवमित्यालोच्य, दुरपह्नवानुभवविशेषस्याख्याते आश्रयत्वार्थकत्वसाधकतामाह—**वस्तुतस्त्विति** ।

**आधेयत्वरूपेति** ॥ कर्तरि विहिततृतीयार्थः कर्तृत्वम् । तच्च प्रकृते आश्रयत्वरूपम् । नव्यमते च कर्तृमत्त्वमेव तृतीयार्थः नञ्समभिव्याहृतस्थलानुरोधात् । तच्चाधेयत्वे पर्यवसितमिति भावः ।

**विशेष्यत्वादिति** ॥ चैत्रेण ज्ञायते घटः इति वाक्यात् चैत्रनिरूपिताधेयताश्रयज्ञाननिरूपितविषयताश्रयो घटः इति बोधो जायते ।

**तादृशानुभवविरोधादिति** ॥ कर्मप्रत्ययस्थले यस्य ससंबन्धिकस्येत्याद्युक्तानुभवविरोधादित्यर्थः ।

न च चैत्रेण ज्ञायते इत्यत्राप्याधेयत्वं संसर्ग एव न तु विशेष्यमिति वाच्यम् । तथा सति आत्मना ज्ञायते न घटेन इत्यादौ घटादिवृत्तित्वाभावबोधानुपपत्तेः । आधेयत्वस्य तृतीयार्थताविरहेण तृतीयान्तात् घटादिवृत्तित्वरूपप्रतियोग्यनुपस्थितेः । आधेयत्वसंबन्धस्याभावप्रतियोगितानवच्छेदकतया च तत्संबन्धावच्छिन्नघटाभावबोधस्य तत्रोपगमासंभवात् । तादृशसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे ज्ञाने न घटः इत्यादिवाक्यजन्यप्रत्यये ज्ञानाद्यधिकरणकतादृशसंबन्धावच्छिन्नघटाद्यभावस्याप्यवगाहनसंभवात् घटे ज्ञानं न वा इत्यादिसंशयनिरासाय कदाचित् ज्ञाने न घटः इत्यादिकमपि प्रयुज्येत ।

विवरणम्

**न तु विशेष्यमिति ॥** तथा च तृतीया आधेयत्वसंसर्गतात्पर्यग्राहिकेति भावः । इत्थञ्च चैत्रो जानातीत्यत्र आधेयतानिरूपकत्वस्याप्रकारत्वेऽपि नानुभवविरोधः इत्याशयः ।

**अभावप्रतियोगितानवच्छेदकतयेति ॥** वृत्त्यनियामकत्वेनेत्यादिः ।

तादृशसंबन्धस्य — आधेयत्वस्य ।

**प्रयुज्येतेति ॥** घटे ज्ञानं न वेति संशयनिरासाय घटे न ज्ञानमित्येव प्रयुज्यते । यद्याधेयतासंबन्धः प्रतियोगितावच्छेदकः तदा ज्ञाने न घटः इति वाक्यात् आधेयत्वसंबन्धावच्छिन्नप्रतियोगिताकघटाभावः ज्ञानवृत्तिः इति बोधसंभवात् तस्य च निरुक्तसंशयविरोधित्वसंभवात् तद्वाक्यमपि पूर्वोक्तसंशयनिरासाय प्रयुज्येतेत्यर्थः ।

अत एव अनुकूलकृतिमत्त्वरूपकर्तृत्वादेरपि चैत्रः पचतीत्यादौ प्रकारता मणिकृतापि स्वीक्रियते न तु संसर्गता । न पचतीत्यादावन्वयबोधानिर्वाहात् । तादृशसंबन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नक्रियाविरहप्रत्ययस्य तत्रोपगमासंभवात् ।

एवं चैत्रेण ज्ञायते इत्यादावाधेयत्वस्य तृतीयया अविवक्षणे प्रातिपदिकार्थमात्रविवक्षया तद्विषयानुशिष्टप्रथमैव स्यात् ॥

जानाति चैत्रः इत्यादौ चाख्यातेन कर्तृत्वाविवक्षणे धात्वर्थरूपभावमात्रपरतया परस्मैपदस्य श्नादिविकरणस्य [42] चासाधुतापत्तिः ।

विवरणम्

अत एव—वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वादेव ।

मणिकृतापि — शाब्दबोधस्याधिकविषयत्वभिया जानातीत्यादावाश्रयत्वसंसर्गकबोधस्वीकर्त्रापीत्यर्थः ।

तादृशसंबन्धस्य-- अनुकूलकृतिमत्त्वस्य ।

तत्र — न पचतीत्यत्र ।

चैत्रेण ज्ञायते इत्यत्र आधेयतायाः संसर्गत्वे नञ्समभिव्याहारस्थले बोधानुपपत्तिमुक्त्वा, तृतीयाया एवासाधुतामाह— **एवमिति ।**

**तद्विषयानुशिष्टेति ।** ' प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ' इत्यनुशासनेन प्रातिपदिकार्थविवक्षायां प्रथमा विहिता ।

दूषयितुं अन्येषां जानातीत्यत्र आख्यातस्य आश्रयत्वार्थकत्वे युक्तिमनुवदति **जानातीत्यादिना ।**

42. वा (ब. कृ.)

**'भावकर्मणोः' इत्यात्मनेपदविधायकानुशासनविषयत्वात्, कर्तरि इत्यधिकारीय 'क्र्यादिभ्यः श्ना' इत्यनुशासनाविषयत्वाच्चेति तत्राख्यातस्य कर्तृत्वबोधकतायुक्तिस्तु न साधीयसी। इतराविशेषणतया क्रियापरत्वरूपभावविवक्षाया[43] आत्मनेपदानुशासनविषयतोपगमादुक्तस्थले परस्मैपदसाधुतायाः, तादृशभावविवक्षादिविरहस्य श्नाद्यनुशासनविषयत्वोपगमेन श्नादिविकरणस्य साधुतायाश्च निर्वाहसंभवात् ॥**

विवरणम्

तत्र — जानातीत्यत्र।

कर्तृत्वबोधकता — आश्रयत्वरूपकर्तृत्वबोधकता।

**इतराविशेषणतयेति**। भावाख्यातस्थले धात्वर्थस्यैव मुख्यविशेष्यतया भानादिति भावः।

**परस्मैपदसाधुताया इति**। जानातीत्यत्र धात्वर्थज्ञानस्य प्रथमान्तार्थविशेषणत्वेन निरुक्तभावविवक्षाया अभावेन आत्मनेपदानुशासनाविषयत्वादिति भावः।

अत्र "तस्मात् जानातीत्यत्र नाख्यातस्य कर्तृत्ववाचकत्वं किन्तु आश्रयत्वार्थकत्वमेव पूर्वोक्तं विज्ञेयम्" (५७१-पृ.) इत्यादर्शः। मुख्यं कर्तृत्वं क्रियानुकूला कृतिरेव। जानातीत्यत्र धात्वर्थस्य ज्ञानस्य कृतिसाध्यत्वाभावात् नानुकूलकृतिमत्त्वरूपं कर्तृत्वं प्रसिद्ध्यति। अपि त्वाश्रयत्वरूपमेव। तच्च गौणं कर्तृत्वम्। यथा नश्यतीत्यत्र प्रतियोगित्वरूपं तत्। अत एवानुपदं, नश्यतीत्यादौ प्रतियोगित्वरूपं कर्तृत्वमाख्यातार्थः इति वक्ष्यति।

43. विवक्षायां (ब. कृ.)

**पचन् पचतीत्यादाविवोद्देश्यतावच्छेदकविधेयाभेदेन जानञ्जानातीत्यादेर्निराकांक्षतानिर्वाहायापि जानातीत्यादावाख्यातस्याश्रयत्वार्थकत्वोपगम आवश्यकः । अन्यथा कृदन्तप्रतिपाद्यतावच्छेदकज्ञानाश्रयत्वरूपोद्देश्यतावच्छेदकस्य[44] ज्ञानादिरूपविधेयभिन्नतया निराकांक्षताविरहेण तथा प्रयोगापत्तेः । एतेन तत्राश्रयतायाः**

विवरणम्

जानातीत्यत्राख्यातस्याश्रयत्वार्थकत्वाभावे परस्मैपदस्य श्नादिविकरणस्य चानुपपत्तिरिति आख्यातस्य आश्रयत्वरूपकर्तृत्वबोधकत्वे युक्तिः न साधीयसी अपि तु अस्मदुक्तयुक्तिरेवेति भट्टाचार्याणामाशयः । सति चैवं, आख्यातस्य न कर्तृत्वार्थकत्वं किन्तु आश्रयत्वार्थकत्वमिति व्याख्यानं कथं संगच्छते? आश्रयत्वातिरिक्तकर्तृत्वार्थकत्वस्य तत्राप्रसक्तत्वेन तन्निराकरणस्यासंगतत्वादिति बोध्यम् ।

अनुभवे विप्रतिपन्नं प्रति अनुभवविरोधमाश्रित्याख्यातस्य आश्रयत्वार्थकत्वव्यवस्थापनं न संभवतीति, जानन् जानातीति वाक्यस्य निराकांक्षत्वसंपादकतारूपयुक्तिमाह—**पचन् पचतीति** ।

**विधेयाभेदेनेति** ।। उद्देश्यतावच्छेदकविधेययोरैक्ये भेदान्वयबोधस्याव्युत्पन्नत्वादिति भावः ।

एतेन — जानन् जानातीत्यस्य निराकांक्षतानिर्वाहाय आख्यातस्याश्रयत्वार्थकत्वव्यवस्थापनेन ।

44. प्रतिपाद्यतावच्छेदकस्य (ब. कृ.)

**प्रकारतोपगमे जानाति चैत्रः इत्यादिवाक्यज्ञानघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायां आख्यातजन्याश्रयत्वोपस्थित्यादिरूपाधिककारणानां निवेशे गौरवेणाश्रयतायाः संसर्गत्वमेवोचितमित्यादिकमनुपादेयम् ।**

**नश्यतीत्यादौ प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः । तादृशसंबन्धस्य वृत्त्यनियामकतया[45] अभावप्रतियोगितानवच्छेदकत्वेन न नश्यतीत्यादौ नाशप्रतियोगित्वाभावबोधस्यैव स्वीकरणीयतया न संसर्गतासंभवः ।**

**अथाख्यातस्य कर्तृत्वशक्ततावच्छेदकं रूपं दुर्वचम् । न च**

विवरणम्

**प्रतिबन्धकतायामिति** । समाने विषये लघ्वी सामग्री प्रबला । भिन्ने विषये तु गुर्वी सामग्री । अतः घटादिभिन्नविषयकप्रत्यक्षे जानातीति शाब्दसामग्री गुर्वी प्रतिबन्धिका । शाब्दबोधस्याधिकविषयत्वे भिन्नविषयकप्रत्यक्षप्रतिबन्धकतायां लाघवस्योक्तत्वादाश्रयत्वप्रकारकबोधस्वीकार एवोचित इत्यपि बोध्यम् ।

प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः — प्रतियोगित्वं निरूढलक्षणया आख्यातप्रतिपाद्यमित्यर्थः ।

ननु लाघवाद्धात्वर्थस्य नाशस्य प्रतियोगितासंबन्धेन प्रथमान्तार्थे अन्वयोऽस्तु इत्याशङ्क्याह — **तादृशसंबन्धस्येति** । प्रतियोगित्वस्येत्यर्थः ।

**अनवच्छेदकत्वेनेति** । प्रतियोगित्वसंबन्धावच्छिन्नप्रतियोगिताकनाशाभावस्याप्रसिद्ध्येति शेषः ॥

एतावता आख्यातसामान्यार्थं सपरिकरं निरूप्य, आख्यातनिष्ठं कर्तृत्वशक्ततावच्छेदकं निष्कर्षयितुमुपक्रमते — **अथेति** ।

45. वृत्त्यनियामकतया इति नास्ति (ब. कृ.)

तिङ्त्वं तथा । [46] तिप्तसादिसाधारणतिङ्त्वस्य दुर्वचत्वात् । न च पाणिनीयसंकेतसंबन्धेन तिङ्पदवत्त्वमेव तिङ्त्वम् । तिबाद्यष्टादशसु तत्पदसंकेतग्राहकश्च आदिरन्त्येनेति सूत्रमेव । तत्संकेतमविदुषामनधीतपाणिनीयतन्त्राणां तिप्त्वादिना शक्तिभ्रमादेव शाब्दबोध इति वाच्यम् । एवं सति घटादिवाचकघटादिपदेष्वपि कस्य चिच्छब्दस्य पुरुषविशेषीयसंकेतसंभवेन तुल्ययुक्त्या तत्रापि तच्छब्दस्यैव [47] शक्ततावच्छेदकतापत्तेः ।

विवरणम्

**पाणिनीयसंकेतसंबन्धेनेति** । पारिभाषिकपदानामीश्वरसंकेते मानाभावादिति भावः ।

**आदिरन्त्येनेति** । 'आदिरन्त्येन सहेता' इति सूत्रम् । तदर्थश्च अन्त्येनेता सह उच्चार्यमाणः आदिः वर्णः मध्यगानां स्वस्य च संज्ञा स्यादिति । एवञ्च तिप्तस्झीत्यारभ्य महिङ्पर्यन्तानां प्रत्ययानां तिङ् इति संज्ञा इति फलितम् ।

नन्वस्य कर्तृत्वशक्ततावच्छेदकत्वे पचतीत्यत्र श्रूयमाणतिबादौ पाणिनेस्तिङ्पदसंकेतमविदुषः शक्ततावच्छेदकज्ञानाभावेन शक्तिज्ञानासंभवात् कथं कर्तृत्वादिरूपार्थोपस्थितिरित्यत आह — **तत्संकेतमिति** ।

**शक्तिभ्रमादेवेति** । योग्यताभ्रमादेव शाब्दभ्रमः इति शक्तिज्ञानस्य भ्रमत्वं शाब्दभ्रमत्वे न प्रयोजकमिति शक्तिभ्रमादपि शाब्दप्रमा जायते इति बोध्यम् ।

**कस्य चिच्छब्दस्येति** । देवदत्तः तशब्देन घटपदबोधो भवत्वितीच्छति । एवञ्च देवदत्तसंकेतसंबन्धेन तशब्दवत्त्वं घटपदनिष्ठमिति तदेव घटपदनिष्ठायां घटवाचकतायामवच्छेदकं स्यादिति समुदायार्थः ।

46. तसादिसाधारणस्य (ब. कृ.)
47. शक्ततावच्छेदकतापत्त्या (का. आ. ब. कृ.)

**तिबादिषु पाणिनेस्तिङ्पदसंकेतवत् तत्र शब्दान्तरसंकेतस्याप्यन्यपुरुषीयस्य संभवात् तत्तच्छब्दानामपि प्रवृत्तिनिमित्ततायाः सुवचत्वाद्विनिगमनानुपपत्तेश्च[48] ॥**

**अत्र केचित् — तिबादिस्थानिनो लकारस्यैव[49] लत्वजातिपुरस्कारेण कृतिवाचकता । पचतीत्यादौ लकाराश्रवणेऽप्यादेशेन**

विवरणम्

ननु विना घटपदज्ञानं न घटरूपार्थोपस्थितिरित्यवश्यज्ञातव्यायाः घटेत्यानुपूर्व्या एव शक्ततावच्छेदकत्वसंभवे, अनपेक्षणीयज्ञानस्य पुरुषविशेषसंकेतसंबन्धेन शब्दविशेषवत्त्वस्य न शक्ततावच्छेदकत्वमित्यतः दूषणान्तरमाह — **तिबादिष्विति** ।

**प्रवृत्तिनिमित्तताया इति** । शक्ततावच्छेदकताया इत्यर्थः । शक्यतावच्छेदकस्येव शक्ततावच्छेदकस्यापि शब्दप्रयोगरूपप्रवृत्तौ निमित्तत्वात् ।

**सुवचत्वादिति** । तिबाद्यष्टादशसु पाणिनेः तिङ्पदसंकेतवत् देवदत्तस्य व्याकरणान्तरप्रणेतुर्वा टिप्रभृतिपदान्तरसंकेतोऽपि संभवति । तिबादिषु वाचकेषु पाणिनिसंकेतसंबन्धेन तिङ्पदवत्त्वमिव देवदत्तादिसंकेतसंबन्धेन टिप्रभृतिशब्दवत्त्वमपि वर्तते इति तदपि तिबादिनिष्ठायां कर्तृत्ववाचकतायामवच्छेदकं स्यादिति समुदायार्थः ।

लः कर्मणीति सूत्रे लकारस्यैव कर्तृत्ववाचकत्वोक्तेः लत्वमेव कर्तृत्वशक्ततावच्छेदकमिति, सूत्रस्वारस्यं मन्यमानानां प्राचीननैयायिकानां मतमुपन्यस्यति — **अत्र केचिदिति** ॥

48. च, नास्ति सर्वत्र ।

49. लकारस्य (ब. कृ.)

तिबादिना स्थानिनः स्मरणात् तत एवार्थोपस्थितिः । आदेशादेशिभावमविदुषान्तु तिप्त्वादिना शक्तिभ्रमादेवार्थोपस्थितिः । यत्र तिबादेर्लादेशत्वज्ञानं [50] नास्ति श्रुतलकाराच्चार्थोपस्थितिः तत्र पचतीत्यादिवाक्याच्छाब्दबोधवारणाय पचतीत्याद्यानुपूर्वीज्ञानजन्यबोधे तिबादेर्लादेशत्वज्ञानमपि हेतुः ॥

न चोक्तस्थले धातुसाकांक्षत्वज्ञाने भवत्येव शाब्दबोधः तदसत्त्वे च कारणाभावादेव नापत्तिरिति वाच्यम् । पचतीत्यादौ

विवरणम्

**स्थानिनः स्मरणादिति** । लकारतिबाद्योः स्थान्यादेशभावरूपसंबन्धज्ञाने सति एकसंबन्धिनः तिबः ज्ञानेन अपरस्य संबन्धिनः लकारस्य स्मरणमिति भावः ।

**अर्थोपस्थितिः** — कर्तृत्वोपस्थितिः ।

**पचतीत्यानुपूर्वीज्ञानजन्यबोधे इति** । शक्तिभ्रमाजन्ये इत्यादिः । तेन न तिबादेर्लादेशत्वज्ञानविरहेऽपि तिप्त्वादिना शक्तिभ्रमात् पचतीत्यतः कर्तृत्वशाब्दबोधोपपादनपरपूर्वग्रन्थेन विरोधः । तथा चैवं पर्यवसितम् । यत्र पचति ल इति श्रुतं लकारेणैव कर्तृत्वोपस्थितिः न तिबा तत्र पचतीत्यतः न पाककर्तृत्वशाब्दबोधः । यत्र पचतीत्येव श्रुतं न लकारोऽपि तत्र पाककर्तृत्वविषयकः शाब्दबोधो जायते । परन्तु लकारतिबाद्योः स्थान्यादेशभावं विदुषां तिबादिना स्मारितलकारात्कर्तृत्वोपस्थितिः । स्थान्यादेशभावमविदुषान्तु तिप्त्वादिना शक्तिभ्रमात्कर्तृत्वोपस्थितिरिति ॥

50. लादेशित्वज्ञानं (का.)

**तिबादिना लकारस्योपस्थापनेऽपि तत्तद्धातुसाकांक्षतया तत्स्मारकाभावेन [51] तच्छाब्दबोधानुपपत्तेः लकारे धातुसाकांक्षत्वग्रहस्य शाब्दबोधहेतुत्वासंभवात् । न हि तत्तद्धातुसाकांक्षत्वेन [52] लस्तिबादिस्थानिता येन तद्रूपावच्छिन्नमेव तिबादिः स्मारयेत् । अपि तु लत्वेनैव तथात्वमिति । एवं तत्तद्धातुपदाव्यवहितोत्तरत्वरूपतत्साकांक्षत्वेन येन पुंसा न लकारः श्रुतः तस्य तेन रूपेण तत्तत्स्मरणासंभवः इति ॥**

विवरणम्

**धातुसाकांक्षत्वेति ।** लकारे इत्यादिः ।

तत्स्मारकाभावेन — लकारस्मारकाभावेन ।

लः — लकारस्य ।

तथात्वं — तिबादिस्थानित्वम् ।

येन रूपेण गृहीतयोः संबन्धग्रहः तयोरेकसंबन्धितावच्छेदकविशिष्टज्ञाने सति अपरसंबन्धितावच्छेदकविशिष्टस्य स्मृतिर्जायते न रूपान्तरावच्छिन्नस्य । तथा च लत्वविशिष्टे एव तिबादिस्थानित्वग्रहात् तिप्त्वावच्छिन्नोपस्थित्या अपरसंबन्धितावच्छेदकलत्वविशिष्टस्यैव स्मृतिर्जायेत न धातुसाकांक्षत्वावच्छिन्नलकारस्येति भावः ।

ननु धातुसाकांक्षत्वस्मारकोद्बोधकान्तरसाहितात् तिबादिज्ञानात् धातुसाकांक्षत्वेन लस्मरणं संभवतीत्यत आह—**एवमिति** ॥

51. शाब्दबोधानुपपत्तेः (ब. कृ)
52. लस्तिबादिस्थानी (ब. कृ.)

**अत्रेदं चिन्त्यते — लकारतिबाद्योरनातिप्रसक्तस्थान्यादेशभावस्य दुर्वचत्वात् तिबादिस्मारितलकारस्य वाचकत्वं न विचारसहम्। तिबादेरेव यत्र वाचकताभ्रमः[53] तदनुरोधेन पचतीत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्योपस्थितिसहकारेण शाब्दबोधोपधायकताकल्पनस्यावश्यकत्वात्[54] लकारजन्योपस्थितिसहकृततादृशानुपूर्वीज्ञानतिबादिधर्मिकलादेशत्वज्ञानघटितसामग्र्यन्तरकल्पने गौरवेण लाघवात् तिबादेरेव ताद्रूप्येण**

विवरणम्

लत्वस्य कर्तृत्वशक्ततावच्छेदकत्वं निराकृत्य तिप्त्वादीनामानुपूर्वीणां तत् व्यवस्थापयति **अत्रेदं चिन्त्यते** इत्यादिना ।

ननु तिप्त्वादिना वाचकत्वे पचतीत्यानुपूर्वीज्ञानतिप्त्वादिप्रकारकज्ञानजन्यकर्तृत्वोपस्थितिघटितायाः पाककर्तृत्वशाब्दबोधसामग्र्याः कल्पनेन गौरवमित्यत आह—**तिबादेवेति** । तथा च निरुक्तसामग्री उभयवादिसंमतेति नातिरिक्तसामग्रीकल्पनागौरवमिति भावः ।

ताद्रूप्येण — तिप्त्वादिरूपेण ।

नचानेकेषां तिप्त्वादीनां शक्ततावच्छेदकत्वकल्पनापेक्षया एकस्यैव लत्वस्य तत्कल्पने लाघवमिति वाच्यम् । पाणिनिव्याकरणे यथा तिबादीनां स्थानी लकारः कल्प्यते । तथा व्याकरणान्तरेषु अन्यो वर्णः स्थानी कल्प्यते । एवञ्च स्थानितावच्छेदकानामपि अनेकत्वाद्विनिगमनाविरहेण तेषां तत्कल्पनाया आवश्यकत्वेन न लाघवावकाशः । न च विनिगमनाविरहात् तिप्त्वादीनामिव लत्वादीनामपि शक्ततावच्छेदकता सिद्ध्येदिति वाच्यम् ।

53. वाचकताग्रहः (ब. कृ.)
54. आवश्यकतया (ब. कृ.)

**शक्तिकल्पनाया उचितत्वञ्चेति दिक्[55] ।**

**आख्यातसामान्यस्य कर्तृत्वे इव तद्विशेषस्यात्मनेपदस्य कर्मत्वे शक्तिः । न तु यथाश्रुतग्राहिवैयाकरणमत इव कर्मरूपधर्मिवाचकत्वं**

विवरणम्

लत्वादीनां तत्त्वे तिबादिना लादीनां स्मरणकल्पनेन गौरवं नास्मन्मते तत्कल्पनागौरवमित्यस्यैव विनिगमकत्वात् । किञ्च शक्तिग्राहकप्रमाणमूर्धन्येन व्यवहारेण श्रूयमाणतिबादिष्वेव शक्तेर्गृहीतत्वात् तिप्त्वादीनामेव श्रूयमाणानां शक्ततावच्छेदकत्वकल्पनमुचितम् । अपि च स्थानिनः लकारस्यैव वाचकत्वे पाचकः इत्यादौ कृदन्तस्थलेऽपि स्थानिन एव लस्य कर्तृवाचकत्वं वक्तव्यम् । इत्थञ्चोभयत्र शक्ततावच्छेदकैक्ये तिबाद्याख्यातस्य कृतिवाचकत्वं कृतस्तु कर्तृवाचकत्वमिति विभागो नोपपद्येत । तस्मात् तिप्त्वादीनामेव शक्ततावच्छेदकत्वकल्पनमुचितम् । एतत्सर्वमभिप्रेत्योक्तं **दिगिति** ।

आख्यातविशेषार्थं निरूपयति **आख्यातेति** ।

न च लःकर्मणीति सूत्रात् लकारसामान्यस्यैव कर्मबोधकत्वस्य प्रतीतेः कथं तद्विशेषस्यात्मनेपदस्य कर्मत्ववाचकत्वमुक्तमिति वाच्यम् । परस्मैपदाधीनस्य कर्मत्वप्रत्ययस्याभावेन तस्यापि कर्मत्ववाचकत्वे मानाभावः । आख्यातसामान्यस्य कर्तृत्ववाचकत्वे तु पच्यन्ते माषाः इत्यादौ आख्याताधीनकर्तृत्वबोध एव मानम् । तत्राख्याताधीनकर्तृत्वबोधश्च युक्त्योपपादितः भट्टाचार्यैः अनभिधानविचारे । न चैवं पचते इत्यत्रापि आत्मनेपदात्कर्मत्वबोधापत्तिरिति वाच्यम् । यगुत्तरतादीनामेव कर्मत्वे शक्तत्वात् ।

55. दिक्—नास्ति (ब. कृ.)

गौरवात् । प्रथमान्तपदार्थे कर्मत्वान्वयबलादेव कर्मताविशिष्टधर्मिलाभ-संभवात् ।

नचात्मनेपदस्य शानच्प्रत्ययस्य धर्मिणि शक्तेः पच्यमान-मानयेत्यादौ पच्यमानादिनिष्ठानयनकर्मत्वाद्यनुरोधेनावश्यकत्वात्तत एवोपपत्तावाख्यातरूपात्मनेपदस्य धर्मवाचकत्वं निर्युक्तिकमिति वाच्यम् । तङ्शानच्साधारणस्यात्मनेपदत्वस्य शक्ततावच्छेदकत्वे एव तथोक्तिसंभवात् । तादृशात्मनेपदत्वस्य चागुरोर्निर्वचनासंभवात् । पाणिन्यादिसंकेतसंबन्धेन आत्मनेपदवत्त्वस्य शक्ततावच्छेदकताया

विवरणम्

ननु कर्मत्वस्याख्यातवाच्यत्वे लकारस्य कर्मवाचकताबोधकेन लःकर्मणीति सूत्रेण विरोधः इत्यत आह—**प्रथमान्तेति** ।

तथा च सूत्रे कर्मणीत्यत्र सप्तम्याः बोधकत्वमर्थः न वाचकत्वमिति भावः । एवं सूत्रस्थकर्मपदस्य कर्मत्वपरत्वात्कर्मत्ववाचकत्वमेव सूत्रेण लभ्यते इत्यपि वक्तुं शक्यते ।

'तङानावात्मनेपदम्' इति सूत्रात् तङ्शानजादिसाधारणमात्मनेपदत्वं कर्मत्वशक्ततावच्छेदकमित्याशयेन शङ्कते **न चेति** ।

कर्मत्वाद्यनुरोधेन — कर्मत्वाद्यन्वयानुरोधेन । पाककर्मत्वे आनयन-कर्मत्वस्य बाधादिति भावः । एतेन कर्त्रर्थकक्तोऽपि धर्मिवाचकत्वे, पक्तार-मानयेत्यादौ आनयनकर्मत्वान्वयानुरोधरूपा युक्तिः सूचिता ।

**अगुरोरिति** ॥ भेदकूटघटितस्यान्यतमत्वस्य गुरुत्वादिति भावः ।

आत्मनेपदवत्त्वस्य आत्मनेपदपदवत्त्वस्य ।

**उक्तरीत्यानवकाशात् । अतस्तादीनां तत्तद्रूपेण शक्तिकल्पनस्यावश्यकतया लाघवात् कर्मत्व एव तत्कल्पनात् ।**

**कर्मत्वञ्च त्यज्यते ग्रामः, गम्यते ग्रामः इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगविभागादिरेव विशेष्यतया तङ्वाच्यः ।**[56]

विवरणम्

उक्तरीत्या — घटादिपदेष्वपि पुरुषविशेषसंकेतसंबन्धेन शब्दविशेषवत्त्वस्य वाचकतावच्छेदकतापत्तेः, तादिष्वेव व्याकरणान्तरप्रणेतुः पदान्तरसंकेतसंभवेन तादिनिष्ठायां कर्मत्ववाचकतायां पुरुषान्तरीयसंकेतसंबन्धेन पदान्तरवत्त्वस्य विनिगमनाविरहेणावच्छेदकत्वापत्तेश्चेति रीत्येत्यर्थः ।

एतावता आत्मनेपदस्य कर्मत्ववाचकत्वमुपपाद्य, गम्यते ग्राम इत्यादौ तत्तत्पदार्थान्वयकथनपूर्वकं शाब्दबोधं वर्णयितुमारभते **कर्मत्वञ्चेति ।**

ननु संयोगादिफलस्य धात्वर्थतावच्छेदकस्य धातुनैव लाभात् किमिति तङ्वाच्यता स्वीक्रियते इत्यत आह — **विशेष्यतयेति** । वैशिष्ट्ये तृतीया । तङ्वाच्यः संयोगादिः धात्वर्थप्रकारतानिरूपितशाब्दबोधीयविशेष्यतावानित्यर्थः । तथा च फलावच्छिन्नव्यापारशक्ताद्धातोः शक्त्या व्यापारविशेष्यतया फलबोधो न संभवतीति संयोगादेस्तथा भानाय तङ्वाच्यतास्वीकार इति भावः । विशकलितयोर्फलव्यापारयोः धात्वर्थतापक्षे आश्रयत्वमेव तङर्थः इत्यग्रे स्फुटीभविष्यति ।

अत्र "**विशेष्यतयेति**, कर्मत्वे शक्तिस्वीकारात्तस्य विशेष्यतया तङ्वाच्यत्वम् ।" (५७६-पृ.) इत्यादर्शः । अनुपदमेव कर्मत्वे एव तत्कल्पनात् इति ग्रन्थेन कर्मत्वस्यैव वाच्यत्वं न तद्विशिष्टस्येत्यभिधानात् तत्समनन्तरं कर्मत्वस्य विशेष्यतया वाच्यत्वं न विशेषणतयेति कथनमनावश्यकमिति एवं व्याख्यानं न समञ्जसं भाति ।

56. तिङ्वाच्यः (ब. कृ.)

**चैत्रेण गम्यते ग्रामः इत्यत्र तृतीयार्थस्तत्कर्तृकत्वरूपमाधेयत्वम् । तस्य धात्वर्थे संयोगात्मकफलावच्छिन्ने स्पन्दलक्षणे व्यापारे, तस्य च जन्यतासंबन्धेनात्मनेपदार्थसंयोगरूपफले, तस्य चाश्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वय इति, चैत्रवृत्तिर्यः संयोगावच्छिन्नस्पन्दः तज्जन्यसंयोगवान् ग्रामः इत्याकारकः शाब्दबोधः । चैत्रेण त्यज्यते ग्रामः इत्यत्र संयोगस्थाने विभागमन्तर्भाव्य बोध उपपादनीयः ।**

**अथ चैत्रनिष्ठक्रियाजन्यसंयोगविभागादेर्ग्रामादाविव चैत्रादावपि सत्त्वात् चैत्रेण त्यज्यते — गम्यते चैत्रः इत्यपि स्यात् ।**

विवरणम्

**तत्कर्तृकत्वरूपमाधेयत्वमिति ।** निरूपकतासंबन्धेन क्रियान्वयिनः कर्तृत्वस्य तृतीयार्थत्वे, न चैत्रेणेत्यादौ तत्संबन्धावच्छिन्नाभावस्य वृत्त्यनियामकस्य निरूपकत्वस्याभावप्रतियोगितानवच्छेदकत्वेनाप्रसिद्ध्या बोधनासंभवात् आश्रयतया वृत्तिनियामकसंबन्धेन क्रियान्वयिनः कर्तृतानिरूपकत्वस्य तृतीयार्थता वाच्या । प्रकृते गमधात्वर्थकर्तृत्वस्याश्रयत्वरूपत्वात्कर्तृतानिरूपकत्वमाधेयत्वे पर्यवसितमिति भावः ।

**अन्तर्भाव्येति ।** इत्थञ्च चैत्रवृत्तिः यः विभागावच्छिन्नस्पन्दः तज्जन्यविभागाश्रयो ग्राम इत्याकारकः शाब्दबोधः चैत्रेण त्यज्यते ग्रामः इति वाक्याज्जायते इति भावः ।

**सत्त्वादिति ॥** संयोगविभागयोः द्विनिष्ठत्वादिति भावः ।

न स्याच्च चैत्रेण न गम्यते, न त्यज्यते चैत्रः इत्यादीति चेत् ।

अत्र दीधितिकारप्रभृतयः — फलमिव तत्र क्रियान्वयि परसमवेतत्वमपि कर्माख्यातार्थः । परत्वे च भेदरूपे प्रतियोगितया,

विवरणम्

न स्याच्चेति ॥ आकडारादेका संज्ञा इत्युक्तेः संज्ञाद्वयसमावेशस्याभावात् परया कर्तृसंज्ञया कर्मसंज्ञायाः बाधात् कर्मसंज्ञानिबन्धनस्य कर्माख्यातस्यासाधुत्वेन चैत्रेण चैत्रो गम्यते इति प्रयोगापत्तिर्न संभवतीत्युक्तावपि न निस्तारः । चैत्रेण चैत्रो न गम्यते इत्यस्यानुपपत्तेः संयोगाभावस्य चैत्रे बाधादिति भावः । न च संयोगस्याव्याप्यवृत्तित्वात् संयोगवत्यपि चैत्रे संयोगानवच्छेदकभागावच्छेदेन संयोगाभावस्याक्षतत्वान्नानुपपत्तिरिति वाच्यम् । पाकानुकूलकृतिमत्यपि (शरीरावच्छेदेन) चैत्रात्मनि तादृशकृत्यनवच्छेदकघटाद्यवच्छेदेन कृत्यभावस्य सत्त्वात् न पचतीति प्रयोगवारणाय देशविशेषानवच्छिन्नविशेषणतासंबन्धेन, आख्यातार्थान्वितनञर्थाभावस्य प्रथमान्तार्थे अन्वयनियम उपगन्तव्यः । एवञ्च संयोगवति चैत्रे देशानवच्छिन्नविशेषणतासंबन्धेन संयोगाभावः बाधित इति तत्प्रयोगानुपपत्तिर्दुर्वारा । अत एव, नञः प्रतियोगिविरोध्यभावबोधकत्वं, विरोधश्च पदानुपस्थाप्योऽपि संसर्गतया भासते । अतश्च वृक्षे कृष्णसंयोगो नास्तीति न प्रयोगः इति लघुचन्द्रिकायां **ब्रह्मानन्दसरस्वत्यः** निरूपयन्ति ।

फले आश्रयतयान्वयिनः प्रथमान्तपदोपस्थाप्यस्यान्वयः। चैत्रे चैत्रान्यसमवेतक्रियाजन्यसंयोगादिमत्त्वस्यान्वयायोग्यत्वात्, तादृशसंयोगाद्यभावस्य च तत्रान्वययोग्यत्वान्न तत्रापत्त्यनुपपत्त्योरवकाश इत्याहुः।

तत्रेदं चिन्तयन्ति — प्रथमान्तपदोपस्थाप्यकर्मणः अन्वयितावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितया भेदांशेऽन्वयोपगमे[57] चैत्रेऽपि चैत्रस्य द्वित्वादिना भेदसंभवेन तत्समवेतक्रियायां परसमवे-

विवरणम्

फले आश्रयतयान्वयिन इति। व्युत्पत्तिवैचित्र्यात्प्रथमान्तार्थस्य आख्यातार्थैकदेशे भेदे प्रतियोगितया, परसमवेतत्वस्य आश्रयतया धात्वर्थे, तस्य च जन्यतया अपरस्मिन्नाख्यातार्थे फले, तस्य चाश्रयतया प्रथमान्तार्थे अन्वयः इत्यर्थः।

आपत्त्यनुपपत्त्योः — चैत्रेण चैत्रो गम्यते इति प्रयोगापत्तेः, चैत्रेण चैत्रो न गम्यते इति प्रयोगानुपपत्तेश्च।

यद्यपि द्वितीयाविचारे परसमवेतत्वं कर्माख्यातार्थः इत्यस्य, धात्वर्थव्यापारस्य स्वावच्छिन्नभेदसामानाधिकरण्यजन्यत्वोभयसंबन्धेन फले अन्वय इत्यत्र तात्पर्यं वर्णितमेव। तथापि तत्र पक्षे परसमवेतत्वस्य प्रत्ययार्थतया भानाभावात् तस्याख्यातार्थतापक्षनिष्कर्षं मतान्तरतन्निरासप्रकारौ च प्रतिपादयितुं विचारमारभते — तत्रेदं चिन्तयन्तीति।

द्वित्वादिना भेदः — चैत्रघटोभयभेदः।

57. अन्वयोपगमेऽपि (ब. कृ.)

तत्राक्षतेरुक्तदोषोद्धारासंभवः । अन्वयितावच्छेदकावच्छिन्नप्रतियोगितया तत्र तद्भानस्वीकारे चैत्रेण द्रव्यं गम्यते इत्यादावनुपपत्तिः । द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वादेः क्रियादौ बाधात् ।

न च तत्र द्रव्यपदं चैत्रान्यद्रव्यपरमिति वाच्यम् । मल्लेन[58] गम्यते मल्लः इत्यादौ मल्लपदस्य मल्लान्यमल्लपरत्वासंभवात् मल्लान्यसमवेतमल्लवृत्तिक्रियाया अप्रसिद्ध्यानुपपत्तितादवस्थ्यात् । अननुगतमल्लगततत्तद्व्यक्तित्वोपस्थित्यनैयत्यात्[59] कर्तृव्यक्तिभिन्नमल्लत्वेन लक्षणाग्रहस्य तादृशवाक्यजन्यधीपूर्वं[60] नियमतोऽसंभवात् ॥

विवरणम्

**उक्तदोषोद्धारासंभव इति** । चैत्रः चैत्रेण गम्यते इति प्रयोगापत्तिरित्यर्थः ।

तत्र — भेदांशे ।

तद्भानोपगमे — प्रथमान्तपदोपस्थाप्यकर्मणः भानोपगमे ।

**क्रियादौ बाधादिति** ॥ क्रियाया द्रव्यमात्रवृत्तित्वादिति भावः ।

**चैत्रान्यद्रव्यपरमिति** ॥ चैत्रसमवेतक्रियायां चैत्रान्यद्रव्यत्वावच्छिन्नभिन्नसमवेतत्वस्याबाधादिति भावः ।

ननु मल्लेन मल्लो गम्यते इत्यत्र प्रथमान्तमल्लपदस्य कर्तृभूतमल्लव्यक्तिभिन्ने मल्ले लक्षणा स्वीक्रियते । तादृशलक्ष्यार्थभिन्नसमवेतत्वञ्च क्रियायामबाधितमिति नानुपपत्तिरित्यत आह — **अननुगतेति** । लक्षणाग्रहस्येत्यस्य प्रथमान्तमल्लपदे इत्यादिः ।

58. मन्देन (ब. कृ.), उत्तरत्र सर्वत्रापि मल्लपदस्थाने मन्दपदं (ब कृ.) पुस्तकयोर्दृश्यते ।
59. कर्मव्यक्ति (का. आ. कृ.)
60. धीपूर्वत्वस्य (ब.) धीपूर्वकत्वस्य (कृ.)

**न च फलविशेष्यव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन परत्वेऽन्वयात् संबन्धोपस्थितेश्चानपेक्षणान्नानुपपत्तिरिति**

## विवरणम्

अत्र "नन्वत्रापि तृतीयान्तमल्लपदस्य कर्मभूतमल्लव्यक्तिभिन्नपरत्वमेव लक्षणयेति नोक्तप्रयोगापत्तिरित्याशङ्क्याह — **कर्मेति**"। (५७८-पृ.) इत्यादर्शः ॥

अत्र प्रथमान्तपदार्थस्य कर्मणः अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन आख्यातार्थपरसमवेतत्वघटके परत्वे अन्वय उपक्षिप्तः। चैत्रेण द्रव्यं गम्यते इत्यत्र कर्मवाचकद्रव्यपदस्य कर्तृचैत्रान्यद्रव्ये लक्षणास्वीकारेण चैत्रसमवेतक्रियायां द्रव्यपदार्थचैत्रान्यद्रव्यत्वावच्छिन्नभिन्नचैत्रसमवेतत्वस्याबाधितत्वेऽपि मल्लेन मल्लो गम्यते इत्यत्रानुपपत्तिः गन्तुरपि मल्लत्वात् तत्समवेतक्रियायां मल्लान्यसमवेतत्वस्य बाधात् इत्यभिहिते सति कर्मबोधकस्य प्रथमान्तमल्लपदस्य कर्तृभूतमल्लव्यक्तिभिन्नमल्ले लक्षणास्वीकारात् गन्तृमल्लसमवेतक्रियायां प्रथमान्तमल्लपदार्थकर्तृभिन्नमल्लत्वावच्छिन्नभिन्नकर्तृमल्लसमवेतत्वस्याबाधान्नानुपपत्तिरित्याशङ्कापरिहाराय अननुगतेत्यादिग्रन्थः प्रवृत्तः। कर्तृवाचकमल्लपदस्य कर्ममल्लव्यक्तिभिन्ने लक्षणा स्वीक्रियते इत्याशङ्कावर्णनं न संगच्छते। कर्तृवाचकपदे लक्षणाया अनावश्यकत्वात्। तथा स्वीकारेऽपि प्रथमान्तपदस्य लक्षणानाश्रयणे तत्पदार्थतावच्छेदकमल्लत्वावच्छिन्नभिन्नसमवेतत्वस्य, तृतीयान्तार्थेन कर्मव्यक्तिभिन्नमल्लसमवेतत्वेन विशेषितायां क्रियायां बाधात्। तस्मात् कर्मव्यक्तिभिन्नमल्लत्वेनेति पाठमवलम्ब्य तृतीयान्तमल्लपदस्य लक्षणापरतया व्याख्यानं न समञ्जसमिति बोध्यम्।

**वाच्यम् । संसर्गतात्पर्यज्ञानानुरोधेन तदुपस्थितेरपि शाब्दबुद्धावपेक्षणीयत्वात् ॥**

**तद्व्यक्त्या तद्व्यक्तिर्न गम्यते इत्यादावभावप्रतियोगिकोटिप्रविष्टतद्व्यक्तित्वावच्छिन्नभिन्नसमवेतक्रियाया[61] अप्रसिद्धेः ॥**

विवरणम्

**संसर्गतात्पर्यज्ञानानुरोधेनेति** ॥ एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थस्यापूर्वत्वात् तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन मल्लविशिष्टभेदपरमिति तात्पर्यज्ञानस्य हेतुत्वासंभवेन, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नमल्लनिष्ठप्रकारतानिरूपितभेदनिष्ठविशेष्यताशालिबोधपरमिति तात्पर्यज्ञानस्यैव हेतुत्वात्, तत्र च संसर्गस्य प्रकारतया भानात् तत्पूर्वं शाब्दबोधीयसांसर्गिकविषयतावतः तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्योपस्थितिरावश्यकीति भावः ।

ननु वाक्यार्थस्यापूर्वत्वेऽपि तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितभेदनिष्ठविशेष्यतानिरूपकत्वसंबन्धेन मल्लविशिष्टबोधपरमिति तात्पर्यज्ञानस्य हेतुत्वसंभवात् तत्र च तद्व्यक्तित्वादेः संसर्गघटकतयैव भानान्न तत्पूर्वं तदुपस्थितिरपेक्ष्यते इत्यत आह — **तद्व्यक्त्येति ।**

**अभावप्रतियोगिकोटिप्रविष्टेति** । तद्व्यक्त्या तद्व्यक्तिर्न गम्यते इत्यतः तद्व्यक्तिभिन्नसमवेता या तृतीयान्तार्थतद्व्यक्तिसमवेतत्वान्विता क्रिया तज्जन्यफलाभाववती तद्व्यक्तिः इति बोधो वाच्यः । तत्र फलाभावप्रतियोगिकोटिप्रविष्टतद्व्यक्तिसमवेतक्रियायां तद्व्यक्तिभिन्नसमवेतत्वस्याप्रसिद्धेरित्यर्थः ।

61. तद्व्यक्तिसमवेतक्रियायाः (आ. ब. कृ.)

ये तु फलं भेदश्च कर्मप्रत्ययार्थः । फले जन्यतासंबन्धेन भेदे च स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन क्रियाया अन्वयः । भेदफलयोश्च कर्मण्याश्रयतासंबन्धेनान्वयः । चैत्रसमवेतक्रियावच्छिन्न-भेदस्य चैत्रो नाश्रय इति तादृशक्रियाजन्यफलाश्रयत्वेऽपि तस्य चैत्रेण चैत्रो गम्यते इति न प्रयोगः । मल्लो मल्लेन गम्यते इत्यादे-रेकमल्लादिनिष्ठक्रियावच्छिन्नभेदसाहितस्य तज्जन्यफलस्य मल्लान्तरे सत्त्वान्नानुपपत्तिरिति ब्रुवते ॥

तन्मतेऽपि चैत्रेण चैत्रो न गम्यते इत्यादेरनुपपत्तिर्दुर्वारैव, चैत्रे चैत्रसमवेतक्रियावच्छिन्नभेदाभावसत्त्वेऽपि तादृशक्रियाजन्यफला-भावस्य बाधात् । न च फलाभावो नञा न तत्र प्रत्याय्यः, अपि

विवरणम्

परसमवेतत्वविचारोपक्रमे उक्तां चैत्रेण चैत्रो न गम्यते इति प्रयोगानुपपत्तिमननुसन्धाय फलसहितस्य परसमवेतत्वघटकभेदमात्रस्य आख्यातार्थत्वं स्वीकुर्वतां मतमाह—**येत्विति** । अस्य व्यवहितेन ब्रुवते इत्यनेन संबन्धः । एतन्मते च प्रथमान्तार्थे आख्यातार्थभेदफलयोः एकत्र द्वयमिति रीत्या भानेन समूहालम्बनविलक्षणस्य बोधस्य स्वीकारान्न वाक्यभेदः मुख्य-विशेष्यताभेदाभावादिति बोध्यम् ।

**बाधादिति** ॥ प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायेन नञ्समभिव्याहारे आख्यातार्थयोः भेदफलयोरुभयोरभावः प्रथमान्तार्थे बोध्यते इति भावः ।

**तु भेदाभाव एव कर्मणीति वाच्यम् । यदा चैत्रेण ग्रामो न गम्यते तदापि तादृशप्रयोगानुपपत्तेः तादृशभेदाभावस्य ग्रामे बाधात् ।**

**न च भेदस्य सामानाधिकरण्यसंबन्धेन फलेऽन्वयः तादृशसंबन्धेन क्रियावच्छिन्नभेदविशिष्टस्य क्रियाजन्यफलस्यैव चाभावो नञा कर्मणि प्रत्याय्यते इति न दोषः विशिष्टाभावस्योभयत्र सत्त्वादिति वाच्यम् । एवमपि मल्लेन यत्रापरमल्लो न गम्यते अपि तु ग्रामादिरेव तत्र**

विवरणम्

कर्मणि — नञसमभिव्याहारे धात्वर्थान्विताख्यातार्थकर्मत्वान्वययोग्ये प्रथमान्तपदोपस्थाप्ये ।

**ग्रामे बाधादिति** ॥ चैत्रवृत्तिक्रियायाः ग्रामे अभावादिति भावः ।

प्रत्येकं भेदाभावस्य फलाभावस्य च बोधे प्रसक्तं दोषं विशिष्टाभावस्य बोधोपगमेन परिहरन् शङ्कते **न चेति** ।

**उभयत्र सत्त्वादिति** ॥ यत्र चैत्रेण ग्रामो न गम्यते तत्र क्रियावच्छिन्नभेदसत्त्वेऽपि फलरूपविशेष्याभावेन विशिष्टाभावस्य, चैत्रेण चैत्रो न गम्यते इत्यत्र चैत्रे फलसत्त्वेऽपि क्रियावच्छिन्नभेदरूपविशेषणाभावेन विशिष्टाभावस्य सत्त्वादित्यर्थः ।

**ग्रामादिगन्तरि[62] मल्ले मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामादिसंयोगस्य सत्त्वेन विशिष्टाभावबाधात् मल्लेन मल्लो न गम्यते इत्यादेरनुपपत्तिः ॥**

विवरणम्

**ग्रामादिगन्तरीत्यादि** । एको मल्लः किमपि करोति अन्यश्च मल्लः ग्रामं गच्छति । तत्र मल्लेन मल्लो न गम्यते इति प्रयोग इष्टः । स न स्यात् । निरुक्तवाक्याच्च मल्लवृत्तिक्रियावच्छिन्नभेदविशिष्टमल्लवृत्तिक्रियाजन्यसंयोगाभाववान् मल्लः इति बोधो वाच्यः । प्रथमान्तमल्लपदप्रतिपाद्ये ग्रामगन्तरि मल्ले मल्लवृत्तिक्रियाजन्यसंयोगो वर्तते । मल्लत्वाक्रान्तस्य तस्यापि तृतीयाप्रकृतिमल्लशब्दबोध्यत्वात् । यो ग्रामं न गच्छति मल्लः तद्वृत्तिक्रियावच्छिन्नभेदोऽपि वर्तते इति विशेष्यविशेषणोभयसत्त्वेन विशिष्टाभावो बाधित इति निरुक्तप्रयोगो न स्यादिति समुदायार्थः ।

मल्लेन मल्लो न गम्यते अपि तु ग्रामादिरेव इत्युपक्रमात् मल्लेन मल्लो न गम्यते इत्यत्र तृतीयान्तमल्लपदार्थः ग्रामगन्ता प्रथमान्तमल्लपदार्थः ग्रामागन्ता इति निश्चित्य, "ग्रामादिगन्तरि मल्ले इति पाठः प्रामादिकः प्रतिभाति । प्रथमान्तमल्लपदार्थे एव विशिष्टाभावबोधस्य प्रतिपाद्यत्वात् तस्मिन् ग्रामगन्तृत्वाभावात् ।" (५८१ पृ.) इति निरूपयन्तः आदर्शकाराः ग्रामाद्यगन्तरि मल्ले इति पाठमङ्गीकुर्वन्ति । तत्र च ग्रामाद्यगन्तरि मल्ले यद्यपि तृतीयाप्रकृतिमल्लपदबोध्यग्रामगन्तृमल्लनिष्ठक्रियावच्छिन्नभेदोऽस्ति । तथापि स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामसंयोगो नास्ति । स्वशब्देन

62. ग्रामाद्यगन्तरि (का. आ.)

विवरणम्

प्रथमान्तमल्लपदार्थग्रामागन्तुरेव ग्रहणस्य न्याय्यत्वात् तत्र च ग्रामसंयोगानुकूलक्रियाया अभावेन, स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामसंयोगस्याप्रसिद्धेः । अपि च तादृशग्रामसंयोगस्य प्रथमान्तमल्लपदार्थे ग्रामागन्तरि असत्त्वेन तत्र भेदविशिष्टफलाभावबाधो न संभवति । अत्र च "यद्यप्यत्र ग्रामसंयोगो ग्रामगन्तृमल्ले एव नागन्तृमल्लेऽपि । तथापि ग्रामगन्तृमल्लस्य स्वात्मकत्वात् मल्लत्वेन रूपेण ग्रामगन्तृमल्लरूपत्वात् ग्रामगन्तृमल्लनिष्ठो ग्रामसंयोगः ग्रामागन्तृमल्ले अस्त्येव मल्लत्वावच्छिन्नसमवेतस्यैव संयोगस्यात्र ग्राह्यत्वात्" इत्यादर्शः । अत्र स्वपदग्राह्ये प्रथमान्तमल्लपदतात्पर्यविषये ग्रामागन्तरि ग्रामगन्तृमल्लवृत्तिमल्लत्वसत्त्वेऽपि तद्वृत्तिग्रामसंयोगस्य कथमप्यसंभवात् अयं ग्रन्थश्चिन्तनीयः । एवं स्वात्मकमल्लनिष्ठक्रियेत्यनेन न ग्रामागन्तृमल्लनिष्ठक्रिया गृहीतुं शक्यते इति "अथ च ग्रामाद्यगन्तरि मल्ले मल्लत्वेन रूपेण स्वात्मको यो ग्रामगन्ता मल्लः तन्निष्ठक्रियाजन्यः यः ग्रामसंयोगः तस्यापि सत्त्वात्" इति आदर्शकाराणां विवरणमप्यालोचनीयमेव । स्वात्मकशब्देन मल्लत्वेन स्वसजातीयार्थकत्वबोधनस्य स्वारसिकत्वाभावात् । किञ्च 'मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमल्लनिष्ठक्रियाजन्यग्रामसंयोगस्य' इति ग्रन्थे मल्लान्तरपदबोध्यः स्वात्मकमल्लपदबोध्यश्च भिन्नभिन्न एव प्रतीयते । तथैव वाक्यस्वारस्यात् । आदर्शव्याख्याने तु मल्लान्तरपदार्थः ग्रामगन्ता स्वात्मकमल्लपदार्थोऽपि स एवेति वाक्यस्वारस्यभङ्गः । तस्मात् ग्रामगन्तरि मल्ले इत्येव समीचीनः पाठः । तत्र च स्वशब्दार्थः ग्रामगन्ता तदात्मकमल्लनिष्ठक्रियाजन्यग्रामसंयोगो वर्तते । मल्लान्तरपदार्थः ग्रामागन्ता मल्लः तन्निष्ठक्रियावच्छिन्नभेदोऽपि वर्तते इति वाक्यस्वरस उपपद्यते ।

**यदि च फलमेव कर्माख्यातार्थः । तस्याश्रयत्वानुकूल-[63] क्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन कर्मण्यन्वयः । नञ्समभिव्याहारे च तदुभयसंबन्धावच्छिन्नाक्रियाजन्यफलाभाव एव [64] तत्रान्वेतीत्युच्यते ।**

विवरणम्

अत्र स्वनिष्ठक्रियाजन्यग्रामसंयोगस्येत्यनभिधाय स्वात्मकमल्लनिष्ठेत्यभिधानं किमर्थमिति नाशङ्कनीयम् । यतः मल्लनिष्ठक्रियावच्छिन्नभेदविशिष्टः मल्लनिष्टक्रियाजन्यग्रामसंयोगः मल्ले बोधनीयः । एकमल्लव्यक्तिवृत्ति-क्रियावच्छिन्नभेदः अपरमल्लव्यक्तिनिष्ठक्रियाजन्यग्रामसंयोगश्च वर्तेते । नोभावपि एकमल्लव्यक्त्यन्तर्भावेण संभवतः परन्तु मल्लत्वावच्छिन्नस्यो-भयस्यापि मल्लेनेत्यत्र मल्लपदार्थत्वमस्तीति भिन्नव्यक्त्यन्तर्भावेणो-भयमुपपादनीयमिति स्फोरणाय स्वात्मकमल्लनिष्ठेत्यभिहितामिति सुधीभिर्वि-भावनीयम् ।

**फलमेवेति** ।। एवकारेण भेदस्य व्यवच्छेदः ।

**अन्वेतीति** ।। तथा च ग्रामगन्तरि मल्ले मल्लवृत्तिक्रियाजन्यः यादृशः संयोगो वर्तते तदनुकूलक्रिया नान्यस्मिन्मल्ले, अपि तु ग्रामगन्तर्येव मल्ले इति आश्रयत्वसत्त्वेऽपि स्वानुकूलक्रियावच्छिन्नभेदवत्त्वा-भावात् निरुक्तोभयसंबन्धेन फलाभावः ग्रामगन्तृमल्ले अक्षत इति निरुक्त-प्रयोगोपपत्तिरिति भावः । स्वानुकूलक्रियावच्छिन्नभेदवत्त्वसंबन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकतया नव्यमते नञ्समभिव्याहारे, तद्घटितोभयसंबन्धेन फलाभावबोधः न संभवतीत्याशयेन यदीत्युक्तम् ।

अत्र "तथा च मल्लेन मल्लो न गम्यते इत्यत्र मल्ले मल्लान्त-रनिष्ठक्रियाजन्यसंयोगो नास्तीति तदभाव एव नञा बोध्यते इति

63. स्वानुकूल (ब. कृ. आ.)
64. अन्वयि (ब. कृ.)

**तदापि यत्र चैत्रमैत्रयोरुभयकर्मजसंयोगः तत्र चैत्रनिष्ठतादृशसंयोगस्य चैत्रे आश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन सत्त्वात् चैत्रेण चैत्रो न गम्यते इत्यस्यानुपपत्तिः[65] । चैत्रेण चैत्रो गम्यते इत्यापत्तिश्च[66] ॥**

विवरणम्

नैतत्प्रयोगानुपपत्तिरिति भावः" (५८२ पृ.) इत्यादर्शः । एतत्पूर्वग्रन्थ-व्याख्यानावसरे ग्रामगन्तृमल्लनिष्ठः संयोगः मल्लत्वेन रूपेण ग्रामागन्तरि वर्तते इत्येवं विशिष्टाभावबाध उपवर्णितः । इदानीं तु मल्लान्तरनिष्ठ-क्रियाजन्यसंयोगः ग्रामागन्तरि मल्ले नास्तीति वर्णनं पूर्वाशयविरुद्धं भाति । यदि च ग्रामगन्तृनिष्ठः ग्रामसंयोगः मल्लत्वेन रूपेण ग्रामागन्तृमल्लव्यक्तावपि वर्तते इति कश्चन पक्षमङ्गीकृत्य पूर्वग्रन्थः प्रवृत्तः । स पक्षः असंगतः इत्याशयेनायं ग्रन्थः इत्युच्यते । तदा अयमेवाशयः यदि चेत्यादिना स्फुटीकर्तव्यो मूले । न तु फलमात्रस्या-ख्यातार्थत्वं संबन्धद्वयेन तस्यान्वय इत्यादिपक्षान्तरोपक्षेपः करणीयः । प्रयोजनाभावादिति विभावनीयम् ।

**उभयसंबन्धेन सत्त्वादिति** । चैत्रक्रियाजन्यसंयोगजनिका मैत्र-क्रियापि तदवच्छिन्नभेदश्च चैत्रे इति भावः । न च स्वानुकूलक्रिया-सामान्यवद्भेदस्य संबन्धतोपगमे नायं दोषः संयोगानुकूलक्रियासामान्यान्तर्ग-तायाः चैत्रनिष्ठक्रियाया आश्रयत्वस्यैव सत्त्वादिति वाच्यम् । उभयकर्मजसंयोगस्थले चैत्रेण मैत्रो गम्यते इत्यस्यानुपपत्तेः दुर्वारत्वात् । संयोगानुकूलक्रियासामान्यवद्भेदस्य मैत्रे बाधात् ।

65. अनुपपत्तेः (ब. कृ.)
66. आपत्तेश्च (ब. कृ.)

अत्रोच्यते—भेदः फलञ्च कर्माख्यातार्थः । स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन चैत्रादिनिष्ठक्रियाविशेषितभेदस्य स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेन फलेऽन्वयः । विशिष्टफलस्य नञसमभिव्याहारे विशिष्टफलाभावस्य नञ्समभिव्याहारे च कर्मण्यन्वयः ।

चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रवृत्तिक्रियावच्छिन्नभेदस्य चैत्रेऽसत्त्वेन विशिष्टफलाभावोऽक्षतः । यत्र मल्लेन ग्रामो गम्यते न तु मल्लान्तरं तत्र मल्लनिष्ठग्रामसंयोगे मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसामानाधिकरण्यस्य तन्मल्लान्तर्भावेण सत्त्वेऽपि

विवरणम्

अत्र प्रथमान्तार्थान्वयिनः फलस्य यत्क्रियाजन्यत्वं बोध्यते तत्क्रियावच्छिभेदो विवक्षितः। ग्रामगन्तृमल्लनिष्ठः संयोगः तन्मल्लनिष्ठक्रियाजन्यः तत्क्रियावच्छिन्नभेदश्च तस्मिन्नास्तीति मल्लेन मल्लो न गम्यते इति प्रयोग उपपद्यते । उभयकर्मजसंयोगस्थले च चैत्रेण चैत्रो न गम्यते इति चोपपद्यते । तत्र हि चैत्रवृत्तिक्रियाजन्यत्वं फले बोध्यते तत्क्रियावच्छिन्नभेदश्च तस्मिन्नास्ति इत्यभिसन्धाय, भेदफलयोः कर्माख्यातार्थत्वं स्वीकृत्य, क्रिययोरैक्यं भेदफलयोः संसर्गघटकतया विवक्षन्निष्कर्षयति —- अत्रोच्यते इति ।

मल्लान्तनिष्ठक्रिया — ग्रामागन्तृमल्लनिष्ठक्रिया ।

तन्मल्लान्तर्भावेण — ग्रामगन्तृमल्लान्तर्भावेण ।

**तादृशभेदप्रतियोगितावच्छेदकमल्लान्तरनिष्ठक्रियाजन्यत्वस्यासत्त्वात् तद्घटितोभयसंबन्धेन मल्लनिष्ठक्रियावच्छिन्नभेदविशिष्टस्य फलस्याभावो मल्ले अक्षत एवेति न कश्चिद्दोषः ॥**

विवरणम्

मल्लान्तरनिष्ठक्रियाजन्यत्वस्य—ग्रामागन्तृमल्लनिष्ठक्रियाजन्यत्वस्य।

तद्घटितोभयसंबन्धेन — स्वप्रतियोगितावच्छेदकजन्यत्वघटितोभयसंबन्धेन ।

**फलस्याभावो मल्ले अक्षत एवेति ।** विशेषणीभूतभेदस्य विशेषणतावच्छेदकीभूतोभयसंबन्धेनाभावाद्विशिष्टाभावः इति भावः ।

फलस्याभावो मल्ले अक्षत इति ग्रन्थेन, पूर्वपक्षोक्तः यत्र मल्लेन मल्लो न गम्यते अपि तु ग्रामादिरेव तत्र मल्लेन मल्लो न गम्यते इति प्रयोगानुपपत्तिर्दोषः परिह्रियते । यदि तत्र प्रथमान्तमल्लपदार्थः ग्रामागन्ता स्यात् तदा तत्र ग्रामसंयोगरूपफलस्याभावादेव विशिष्टाभावः अनायासेन संपद्यते इति संयोगे स्वप्रतियोगितावच्छेदकजन्यत्वघटितोभयसंबन्धेन भेदरूपविशेषणाभावाधीनविशिष्टाभावोपपादनं व्यर्थं स्यात् । अतोऽपि ज्ञायते पूर्वं ग्रामादिगन्तरि मल्ले इत्येव पाठः भट्टाचार्यानुमत इति । यदि च मल्लत्वेन रूपेण ग्रामागन्तर्यपि मल्ले ग्रामसंयोगोऽस्तीति मन्यते । तदा तादृशसंयोगे मल्लनिष्ठग्रामसंयोगत्वेन मल्लान्तरनिष्ठक्रियाजन्यत्वमपि कुतो नास्तीति विवेचनीयम् । अत्र स्वप्रतियोगितावच्छेदकक्रियाजन्यत्वाभावोपपादनावसरे प्रवृत्तः 'प्रथमान्तार्थमल्लनिष्ठग्रामसंयोगस्य प्रथमान्तार्थमल्लसमवेतग्रामगमनक्रियाजन्यत्वात्' इत्यादर्शग्रन्थः प्रथमान्तार्थस्य ग्रामगन्तृत्वमनुमन्यमानः पूर्वतनस्वग्रन्थेन विरुद्ध्यते इति विभावनीयम् ।

**कर्तृप्रत्ययस्थले चाधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपपरार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेनान्वयः । तादृशभेदस्य च स्वप्रतियोगितावच्छेदकत्वसंबन्धेन क्रियायाम् ॥**

विवरणम्

यद्यपि द्वितीयार्थनिरूपणे, ग्रामं गच्छतीत्यादौ प्रकृत्यार्थान्वितस्य द्वितीयार्थफलस्य स्वजनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन क्रियायामन्वयः इति निष्कर्ष उक्तः । ततोऽपि निरुक्तस्थले मल्लो मल्लं न गच्छति इति प्रयोग उपपद्यते । मल्लवृत्तिसंयोगजनिकायाः स्वात्मकमल्लनिष्ठायाः क्रियायाः तत्संयोगाश्रयस्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावात् तादृशभेदप्रतियोगितावच्छेदिकायाश्च मल्लान्तरनिष्ठायाः क्रियायाः मल्लवृत्तितत्संयोगजनकत्वाभावात् । एवमुभयकर्मजसंयोगस्थले चैत्रः चैत्रं न गच्छतीति प्रयोगः संगच्छते । चैत्रवृत्तिसंयोगजनिकायाः मैत्रवृत्तिक्रियायाः तादृशभेदप्रतियोगितावच्छेदकत्वेऽपि तदाश्रयत्वस्य चैत्रे अभावात् ।

तथापि चैत्रो ग्रामं गच्छति न चैत्रमित्यत्र यदा क्रियानुयोगिकः अभावः तात्पर्यवशात् प्रतीयते तदानुपपत्तिः । स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य वृत्त्यनियामकत्वेन अभावप्रतियोगितानवच्छेदकतया तत्संबन्धावच्छिन्नाभावस्य क्रियायां बोधनासंभवात् । न चाश्रयतया क्रियान्वयिनः तादृशभेदप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थत्वे नोक्तदोष इति वाच्यम् । तथापि चैत्रवृत्तिसंयोगसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावस्य क्रियायां सत्त्वेऽपि चैत्रवृत्तिसंयोगजनकत्वाभावस्य बाधितत्वान्निरुक्तप्रयोगानुपपत्तिर्दुर्वारा । न च नञ्समभिव्याहारे तादृशभेदप्रतियोगितावच्छेदक-

**यत्र चैत्रक्रियया ग्रामे न संयोगः अपि त्वन्यत्र तत्र ग्रामं गच्छति चैत्रः इति प्रयोगवारणाय स्वजनकक्रियावच्छिन्नप्रति-**

विवरणम्

त्वाभाव एव बुध्यते, न फलजनकत्वाभावोऽपीति वाच्यम् । तथा सति ग्राममगच्छति चैत्रे ग्रामं न गच्छतीति प्रयोगो दुर्घटः स्यात् । ग्रामनिष्ठ-भेदप्रतियोगितावच्छेदकत्वाभावस्य क्रियायां बाधात् । अतः फलस्य भेदस्य च द्वितीयार्थत्वं स्वीकृत्य फलस्य सामानाधिकरण्यस्वजनकक्रिया-वच्छिन्नप्रतियोगिताकत्वोभयसंबन्धेन द्वितीयार्थे भेदे अन्वयः स्वीकरणीयः । एवञ्च परसमवेतत्वघटकस्य भेदस्य विभक्त्यर्थत्वेन परसमवेतत्वं द्वितीयार्थः इति दीधितिः संगता भवति । चैत्रः चैत्रं न गच्छतीत्यादौ यदा क्रियानुयोगिकाभावबोधे तात्पर्यं, तदा द्वितीयार्थफलान्वितस्य तदर्थभेद-प्रतियोगितावच्छेदकत्वस्यैवाभावः क्रियायां बोध्यते इत्याशयेन ग्रामं गच्छतीत्यादौ बोधप्रकारमाह — **कर्तृप्रत्ययस्थले चेति** ।

**अपि त्वन्यत्रेति ।** सामानाधिकरण्यमात्रस्य संबन्धत्वे ग्राममगच्छति तूष्णींभूते चैत्रे ग्रामं गच्छतीति प्रयोगापत्तिर्न संभवति तद्वाक्याद्बुध्यमानस्य ग्रामवृत्तिसंयोगसमानाधिकरणभेदप्रतियोगितावच्छेदकक्रियाश्रयत्वस्य तूष्णीं-भूते बाधात् । अतोऽन्यत्र गमनमभिहितं चैत्रस्य । यद्यपि द्वितीयार्थ-फलस्य जनकतासंबन्धेन क्रियायामन्वयोपगमेनापि अयं दोषः सुवार इति स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वस्वीकारो व्यर्थः । तथापि विभक्त्यर्थफलस्य क्रिया भेदश्चेत्युभयत्रान्वयापेक्षया भेदे एवान्वये लाघव-मभिप्रेत्य तथाभिहितमिति बोध्यम् ।

**योगिताकत्वस्य, चैत्रो ग्रामं गच्छतीत्यादौ चैत्रः चैत्रं गच्छतीति प्रयोगवारणाय सामानाधिकरण्यस्य संबन्धमध्ये निवेशः । चरमस्थले चैत्रग्रामसंयोगस्य[67] तादृशभेदे सामानाधिकरण्यविरहाच्चैत्रक्रियायां तद्भेदप्रतियोगितावच्छेदकत्वसत्त्वेऽपि नातिप्रसङ्गः ॥**

विवरणम्

अत्र स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वसंबन्धेन द्वितीयार्थफलान्वितस्य भेदस्य स्वप्रतियोगितावच्छेदकत्वसंबन्धेन क्रियायामन्वयोक्तेः फलजनकक्रियायाः भेदप्रतियोगितावच्छेदकक्रियायाश्चैक्यं विवक्षितम् । **सामानाधिकरण्यस्य संबन्धमध्ये निवेश इति** ।

ननु चैवमपि चैत्रः चैत्रं गच्छतीति प्रयोगो दुर्वारः द्विनिष्ठस्य चैत्रवृत्तिसंयोगस्याधिकरणे ग्रामे गमनवद्भेदस्य सत्त्वेन चैत्रवृत्तिसंयोगसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाद्गमनक्रियायाः इत्यत आह — **चरमस्थले इति** ।

**सामानाधिकरण्यविरहादिति** । आधेयतया प्रकृत्यर्थचैत्रविशिष्टस्य फलस्य वैशिष्ट्यं भेदे भासते । आधेयतया चैत्रविशिष्टस्य संयोगस्याधिकरणं चैत्र एव न ग्रामः इति नोक्तदोष इति भावः ।

67. चैत्रग्रामसंयोगस्य ग्रामनिष्ठचैत्रक्रियावच्छिन्नभेदे संबन्धद्वयसत्त्वेऽपि चैत्रवृत्तित्वविशिष्टस्य तत्संयोगस्य (ब. कृ.)

**चैत्रः चैत्रं न गच्छतीत्यादौ च तादृशभेदान्वितक्रिया-कर्तृत्वाभाव एव चैत्रे प्रतीयते न तु क्रियायां द्वितीयार्थविशिष्टभेदस्य**

विवरणम्

ननु चैत्रो ग्रामं गच्छति न चैत्रमित्यत्र धात्वर्थे गमने ग्रामकर्मकत्वं चैत्रकर्मकत्वाभावश्चानुभूयते । उक्तरीत्या बोधवर्णने द्वितीयार्थफल-विशिष्टस्य भेदस्य प्रतियोगितावच्छेदकत्वसंबन्धेनाभावः धात्वर्थे बोध्यते इति वक्तव्यम् । तच्च न संभवति । प्रतियोगितावच्छेदकत्वसंबन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकतया तत्संबन्धावच्छिन्ना-भावस्याप्रसिद्धेरित्यत आह — **चैत्रः चैत्रं न गच्छतीत्यादौ चेति ।**

**भेदान्वितक्रियेति** । सा च क्रिया चैत्रसंयोगजनिका मैत्रादि-समवेता बोध्या । तत्कर्तृत्वाभावश्च चैत्रे अबाधित इति भावः । एतेन, विनापि परसमवेतत्वस्य द्वितीयार्थतां चैत्रः चैत्रं गच्छति इति प्रयोगवारणं संभवति । कर्मसंज्ञाया एव द्वितीयानियामकत्वात् 'आकडारादेका संज्ञा' इति शास्त्रात् संज्ञाद्वयसमावेशायोगात् परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात् द्वितीयाया असाधुत्वात् । एवञ्च परसमवेतत्वस्य द्वितीयार्थतास्वीकारो व्यर्थः इति निरस्तम् । चैत्रः चैत्रं न गच्छतीति वाक्यप्रामाण्यानुरोधेन परसमवेतत्वस्य द्वितीयार्थताया आवश्य-कत्वात् । अन्यथा चैत्रनिष्ठगमने चैत्रनिष्ठसंयोगजनकत्वाभावस्य, चैत्रे तद्वृत्तिसंयोगजनकक्रियाश्रयत्वाभावस्य च बाधेन तद्वाक्यप्रामाण्या-योगात् । परसमवेतत्वस्य द्वितीयार्थत्वे तु प्रामाण्यमुपपादितम् । इदन्तु ध्येयम् घटं जानाति घटो ज्ञायते इत्यादौ कर्मप्रत्ययेन परसमवेतत्वस्य न बोधः प्रयोजनाभावादिति ॥

प्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नाभावः, तादृशसंबन्धस्य वृत्त्यनियामकत्वात् । यदि तात्पर्यविशेषवशात् क्रियानुयोगिकोऽप्यभावः क्वचित् प्रतीयते इत्यनुभवसिद्धम् । तदा प्रतियोगितावच्छेदकत्वेऽपि द्वितीयाद्यर्थत्वमुपगम्य विशिष्टभेदप्रतियोगितावच्छेदकत्वाभावान्वय एव तत्रोपगन्तव्य इति दिक् ।

**फलावच्छिन्नव्यापारबोधकधातूनां फले व्यापारे च शक्तिद्वयम् ।**

विवरणम्

ग्रामं गच्छति न गुणं, नाप्यभावमित्यादौ द्वितीयाविचारोक्तं बोधप्रकारं स्मारयति **दिगिति** ।

फलावच्छिन्नव्यापारशक्ताद्धातोः विना लक्षणां फलस्य व्यापारविशेष्यतया भानं न संभवतीति फलस्य कर्माख्यातार्थता स्वीकृता । एवञ्च कर्माख्यातस्थले फलस्य धात्वर्थतया आख्यातार्थतया च द्वेधा भानं प्रसज्यते । तच्चानुभवविरुद्धमिति फलं व्यापारश्च धात्वर्थः । व्युत्पत्तिवैचित्र्याच्च फलं धात्वर्थव्यापारविशेष्यतया भासते । आश्रयत्वमाख्यातार्थः इति दीधितिकृतां मतमुपन्यस्यति — **फलेति** ।

सकर्मकधातूनामेव फलावच्छिन्नव्यापारबोधकत्वम् । अकर्मकधातूनान्तु व्यापारमात्रार्थकत्वम् । न तु वैयाकरणमत इव सर्वेषां धातूनां फलावच्छिन्नव्यापारबोधकत्वं गौरवादिति मन्तव्यम् । अत्र मते गम्यते इत्यादौ आश्रयत्वं भेदश्चाख्यातार्थः । धात्वर्थव्यापारस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदे, तस्य व्युत्पत्तिवैचित्र्यात् सामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेन धात्वर्थान्तरे फले, तस्याख्यातार्थान्तरे आश्रयत्वे, तस्य च प्रथमान्तार्थे अन्वय इति बोध्यम् ।

**शक्तिद्वयमिति** । नानार्थहर्यादिपदात् धातुपदस्य शक्तौ विशेषः पञ्चमीविचारोक्तः अवसेयः ।

**कर्त्राख्यातस्थले फलं धात्वर्थव्यापारविशेषणतया भासते । तत्र द्वितीयार्थाधेयत्वान्वयः । कर्माख्यातस्थले फलं धात्वर्थव्यापारस्य विशेष्यतया भासते । तस्य विशेष्यतया आख्यातार्थ आश्रयत्वं तद्विशेष्यतया कर्म भासते इति दीधितिकृतः ।**

**केचित्तु संयोगादिरूपफलावच्छिन्नव्यापारबोधकानां गमिप्रभृतीनां कर्मप्रत्ययापेक्षया बहूनां फले शक्तिकल्पनामपेक्ष्य कर्मप्रत्ययानां फले शक्तिकल्पनमेव लघीयः । धातूनाञ्च व्यापारमात्रवाचिता । धातोः फलबोधकतामते नामार्थधात्वर्थयोराधाराधेयभावसंबन्धेन साक्षादन्वयासंभवात् फलाश्रयत्वस्य कर्मणि प्रकारतया**

विवरणम्

द्वितीयाविचारे विस्तरेणोपपादितमपि व्यापारमात्रस्य धात्वर्थतावादिमतं अधिकदोषविवक्षया प्रतिपत्तिसौकर्याय आशयवर्णनपूर्वकं संक्षेपतो निरूपयति — **केचित्त्विति** । प्राचीना नैयायिका इत्यर्थः ।

कर्मप्रत्ययानां — कर्मणि विहितानां प्रत्ययानां अमादीनां तादीनाञ्चेत्यर्थः। अल्पानामिति शेषः ।

**व्यापारमात्रवाचितेति** । व्यापारत्वं धर्मत्वम् ।

कर्मप्रत्ययानां फलवाचकत्वे शक्ततावच्छेदकलाघवमभिप्राय, शाब्दबोधस्याधिकविषयकत्वाकल्पनप्रयुक्तं लाघवमप्याह — **धातोः फलबोधकतामते इति** ।

**अन्वयासंभवादिति** । तण्डुलकर्मकपाकतात्पर्येण तण्डुलः पचतीति प्रयोगवारणाय नामार्थधात्वर्थयोः भेदेनानन्वयव्युत्पत्तेरिति भावः ।

**भानस्योपगन्तव्यतया तत्संसर्गस्याधिकस्य भानकल्पनेनापि गौरवम् । फलस्य प्रत्ययार्थत्वे च तदाश्रयत्वं संबन्ध एवेति लाघवम् । न च धातूनां व्यापारमात्रवाचित्वे ग्रामं त्यजतीत्यादितोऽपि ग्रामं गच्छतीत्यादित इव संयोगादिरूपफलावच्छिन्नस्पन्दबोधापत्तिः, ग्रामस्त्यज्यते इत्यादितोऽपि ग्रामो गम्यते इत्यत इव स्पन्दजन्य-संयोगादिमत्त्वेन भानप्रसङ्ग इति वाच्यम् । कर्मप्रत्ययस्य संयोग-विभागादिरूपनानाफलवाचित्वेऽपि तत्तत्फलबोधे धातुविशेष-समभिव्याहारज्ञानस्यापेक्षयाऽतिप्रसङ्गविरहात् ।**

**त्यजति, गच्छति, स्पन्दते, त्यागः,[68] गमनं, स्पन्दः इत्यादौ**

विवरणम्

तत्संसर्गस्य — आश्रयत्वीयसंबन्धस्य ।

**संबन्ध एवेति** । अनवस्थापत्त्या संसर्गसंसर्गः न विशिष्टबुद्धिविषय इति भावः ।

**भानप्रसङ्ग इति** । ग्रामस्येत्यादिः । यद्वा भानं शाब्दबोधः । संयोगादिमत्त्वेनेत्यत्र तृतीयार्थः प्रकारत्वम् । संयोगादिमत्त्वप्रकारकशाब्द-बोधप्रसङ्गः इत्यर्थः ।

शाब्दबोधवैलक्षण्यप्रयोजकस्य धातुविशेषसमभिव्याहृतकर्मप्रत्ययाधीन-फलविशेषभानस्य, त्यजति, गच्छतीत्यादावसंभवात् अविलक्षणबोधापत्ति-रित्याशङ्क्याह—**त्यजतीति** ।

68. त्यागः, गमनं, स्पन्दः, इति नास्ति (ब.)

**कर्मसमभिव्याहृते बोधवैलक्षण्यं च तत्तद्धातूनां फलविशेषावच्छिन्नव्यापारलक्षणोपगमेनोपपादनीयम् । फलान्वितस्वार्थव्यापारबोधकत्वं सकर्मकत्वं[69] गम्यादेः स्वभावाधीनम् । तदभावात् स्पन्दिप्रभृतिषु अकर्मकत्वव्यवहार इत्याहुः ।**

**तन्न—यागमिप्रभृतीनामिव त्यजिगमिप्रभृतीनामपि पर्यायतेति भ्रमदशायां याति, गच्छतीत्यादाविव त्यजति, गच्छति इत्यादितोऽप्य-**

विवरणम्

**कर्मासभिव्याहृते इति ।** कर्मवाचकपदसमभिव्याहारे तत्पदोत्तरप्रत्ययेन फलविशेषभानं संभवतीति भावः ।

लक्षणोपगमेन — निरूढलक्षणोपगमेन ।

ननु सर्वेषामपि धातूनां व्यापारमात्रार्थकत्वे, फलावच्छिन्नव्यापारबोधकत्वं धातोः सकर्मकत्वं व्यापारमात्रार्थकत्वमकर्मकत्वमिति व्यवस्था न स्यादित्यत आह — **फलान्वितेति** ।

स्वभावाधीनम् — शब्दस्वभावाधीनम् । स च स्वभावः लोकव्यवहारसमधिगम्यः ।

**पर्यायतेति भ्रमदशायामिति ।** यद्यपि त्यजिगम्योर्द्वयोरपि व्यापाररूपैकार्थवाचकत्वस्यैव तन्मते सत्त्वान्न भ्रमसंभवः । तथापि पदान्तरसमभिव्याहारे येन सह यस्य अन्यूनानतिरिक्तविषयकबोधजनकत्वं तत्त्वरूपं पर्यायत्वं त्यजिगम्योर्नास्त्येवेति तादृशपर्यायत्वभ्रम उपपद्यते इति बोध्यम् ।

69. सकर्मकत्वं, नास्ति (ब. कृ.)

विलक्षणबोधोत्पत्त्या धातुविशेषसमभिव्याहारस्य फलविशेषबोध-नियामकताकल्पनासंभवात् । न च ग्रामं त्यजति इत्यादितः संयोगावच्छिन्नव्यापारबोधः तात्पर्यसत्त्वे इष्यते एव, त्वन्मतेऽपि तात्पर्यानुरोधेन लक्षणया तद्बोधोत्पत्तेरावश्यकत्वात् । परन्तु विभागादिरूपफले एव फलप्रत्ययतात्पर्यस्यानादितया संयोगादिरूपफलप्रत्यायनेच्छया स्वरसतो न तादृशप्रयोग इति वाच्यम् । विना शक्तिभ्रमं लक्षणाग्रहश्च ग्रामं त्यजतीत्यादितः सत्यपि तात्पर्ये संयोगावच्छिन्नव्यापाराप्रतीतेरानुभविकतया धातोः फलविशेषवाचिताया आवश्यकत्वात् ।

ज्ञायते इष्यते क्रियते घटः इत्यादौ विषयत्वरूपं कर्मत्वं

विवरणम्

त्वन्मतेऽपि — धातोः फलावच्छिन्नव्यापारवाचकत्वमतेऽपि ।

**फलप्रत्ययेति** । कर्मत्वस्य फले पर्यवसानात् कर्मत्वबोधकः प्रत्ययः फलबोधकः फलप्रत्यय इत्यभिधीयते ।

**अनादितयेति** । तात्पर्ये अनादित्वञ्च स्वप्रयोज्यशाब्दबोधध्वंसकालीनस्वप्रयोज्यशाब्दबोधसामान्यकत्वम् । फलविशेषवाचिताया इत्यस्य स्वार्थव्यापारविशेषणतयेत्यादिः ।

**आवश्यकत्वादिति** । इयं युक्तिः द्वितीयाविचारे अनभिहितेति ध्येयम् ।

आख्याताधीनं मुख्यकर्मत्वबोधं सपरिकरमुपपाद्य, तदधीनं गौणकर्मत्वबोधं निरूपयति **ज्ञायते इति** ।

**विषयत्वरूपमिति** । क्रियाजन्यफलशालित्वरूपस्य कर्मत्वस्य तत्रासंभवादिति भावः । विषयत्वरूपगौणकर्मत्वबोधकेन प्रत्ययेन न परसमवेतत्वादेर्भानमनावश्यकत्वात् । अत एव आत्मानमात्मना वेत्सि इत्यादयः प्रयोगाः विनायासमुपपद्यन्ते ।

तदर्थः । न च कृतिविषयतायाः फलतत्साधनतदुपादानसाधारणतया यत्र घटः क्रियते इत्यादि प्रयुज्यते तत्र जलाहरणं[70] क्रियते, कपालं क्रियते इत्यादिप्रयोगस्यापत्तिरिति वाच्यम्[71] । कृत्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययस्य चिकीर्षाप्रयोज्यसाध्यताख्यविलक्षणविषयत्वमेवार्थः । उक्तस्थले च कपालादौ कृतेस्तादृशविषयत्वाभावान्नोक्तप्रयोगप्रसङ्गः ।

काशाः कटः[72] क्रियन्ते इत्यादौ साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्मप्रत्ययेन व्यापार्यतारूपविषयतापि प्रत्याय्यते । अतः उपादानतया[73] कृतिविषयकाशादौ साध्यतारूपकृतिविषयता-

विवरणम्

**फलतत्साधनतदुपादानसाधारणतयेति** । फले कृतेर्विषयता उद्देश्यता, तत्साधने साध्यता, उपादाने उपादानताख्या । इमां व्यापार्यतापदेनापि व्यवहरन्ति । चिकीर्षाप्रयोज्येति साध्यतारूपविषयताविशेषे प्रमाणसूचनाय । न तु तदन्तर्भावेण प्रत्ययार्थता ।

ननु कृत्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययेन साध्यत्वरूपविषयत्वस्य बोधने काशाः कटः क्रियन्ते इति प्रयोगानुपपत्तिः कृतिसाध्यत्वस्य काशेष्वभावादित्यत आह — **काशाः कटः क्रियन्ते इत्यादाविति** ।

70. जलाहरणं कपालं क्रियते (ब.)
71. चेत् (ब. कृ.)
72. कटाः क्रियन्ते (का. आ. कृ.)
73. तदुपादानतया (ब. कृ.)

**विरहेऽपि[74] न तादृशप्रयोगानुपपत्तिः । तादृशकर्मसमभिव्याहाररूप-तत्प्रयोजकविरहात् काशाः क्रियन्ते इत्यादौ काशादौ व्यापार्यता-बोधानुपपत्तेर्न तादृशप्रयोगः इति ।**

**काशाः कटः क्रियन्ते इत्यादावपि विशेष्यभेदेन वाक्यार्थभेदात् कर्मद्वयवाचकपदयोः समभिव्याहारे व्यापार्यताबोधानुपपत्तिः ।**

विवरणम्

**न तादृशप्रयोग इति** । प्रत्ययबोध्यस्य कृतिसाध्यत्वस्य काशेषु बाधादिति भावः ।

उपादानतयेत्यत्र तृतीयार्थः अभेदः कृतिविषयेत्यत्र विषयशब्दार्थैक-देशविषयतायामन्वेति । साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्म-प्रत्ययेनेत्यत्र समभिव्याहृतान्तस्य प्रयोजनमाह — **तादृशकर्मेति** ।

तत्प्रयोजकविरहः — व्यापार्यतारूपविषयताबोधप्रयोजकविरहः ।

**विशेष्यभेदेनेति** । काशान्वितं व्यापार्यताख्यविषयत्वं, कटान्वितं साध्यताख्यविषयत्वञ्चेत्युभयमपि आख्यातेन बोध्यते काशः कटश्च मुख्यविशेष्यः इति भावः ।

वाक्यार्थभेदात् — वाक्यार्थभेदेन वाक्यभेदप्रसङ्गात् ।

**व्यापार्यताबोधानुपपत्तिरिति** । काशाः कटः क्रियन्ते इत्यत्र साध्यताख्यविषयताविशेषसंबन्धेन कटान्वितायाः धात्वर्थकृतेः, आश्रयतया मुख्यविशेष्यकाशान्वयिनि आख्यातार्थे व्यापार्यतारूपे विषयत्वे निरूपितत्व-

74. विरहान् (का.)

विवरणम्

संबन्धेनान्वयः । कटसाध्यककृतिनिरूपितव्यापार्यतावन्तः काशाः इति तद्वाक्याधीनो बोधः । साध्यताख्यविषयत्वरूपकर्मत्वस्य धात्वर्थे प्रातिपदिकार्थस्य संसर्गतया विवक्षणान्न कटपदाद्द्वितीया । प्रातिपदिकार्थ-विशेष्यतया कर्मत्वे विवक्षित एव द्वितीयाया विधानात् । एवञ्च वाक्यार्थस्य भेदाभावान्न वाक्यभेद इति निरुक्तानुपपत्तिपरिहारः द्वितीया-ग्रन्थानुसारी बोध्यः ।

अत्र "अत्रापि व्यापार्यतारूपविषयताकत्वविशिष्टे व्यापारे साध्यतारूप-विषयताकत्वस्यान्वयस्वीकारान्न विशेष्यताभेदः । तथा च न वाक्यार्थ-भेदापत्तिः" (५८९-पृ.) इत्यादर्शः ॥ काशान् कटं करोति इत्यत्र हि धात्वर्थे द्वितीयान्तकाशपदार्थकाशनिष्ठव्यापार्यतारूपविषयताकत्वविशिष्टे द्वितीयान्तकटपदार्थस्य कटनिष्ठसाध्यताख्यविषयतानिरूपकत्वस्यान्वयः संभवति । तत्र च न वाक्यभेदस्य प्रसक्तिः शाब्दबोधमुख्यविशेष्यस्य प्रथमान्तार्थस्यैकत्वात् । काशाः कटः क्रियन्ते इत्यत्र तु प्रथमान्तकाशपदार्था-न्विताख्यातार्थव्यापार्यतारूपविषयताकत्वान्विते धात्वर्थे प्रथमान्तकटपदार्था-न्वितापराख्यातार्थसाध्यतारूपविषयताकत्वस्यान्वयो न व्युत्पन्नः । नाप्यत्र धात्वर्थस्यैकस्य मुख्यविशेष्यतया वाक्यार्थभेदाभावान्न वाक्यभेदः इत्याशय-वर्णनं समीचीनम् । कर्माख्यातस्थले धात्वर्थमुख्यविशेष्यकबोधस्य सिद्धान्त-विरुद्धत्वात् । द्वितीयाग्रन्थेऽपि भट्टाचार्यैर्नैतादृशो बोधः स्वीकृतः । परन्तु व्युत्पत्तिवैचित्र्यात् साध्यतापर्यवसितेन कर्मत्वसंबन्धेन प्रथमान्तार्थविकृति-कर्मान्वितधात्वर्थव्यापारस्य व्यापार्यतापर्यवसिते आख्यातार्थकर्मत्वे तस्य च प्रथमान्तार्थे प्रकृतिकर्मण्यन्वयः । काशपदार्थस्यैव विशेष्यतया न वाक्यभेदः । इयमेव रीतिः काष्ठानि भस्मराशिः क्रियन्ते इत्यत्र भट्टाचार्येण कण्ठरवेणैव प्रतिपादितेति बोध्यम् ।

**एवं[75] क्रियते इत्यत्र विषयतायाः कर्मप्रत्ययार्थत्वे पाकानुपधायककृतिमादाय पाकोऽकारि इत्यादिप्रयोगापत्तिरित्यादिकं तु दूषणं निराकृतमधस्तात् ।**

विवरणम्

**पाकोऽकारि इति प्रयोगापत्तिरिति** । अत्र निरूपितत्वसंबन्धेन धात्वर्थकृत्यन्वितस्य आख्यातार्थविषयत्वस्य स्वनिरूपकजन्यत्वसहिताश्रयत्वसंबन्धेन प्रथमान्तपदार्थे पाके अन्वयस्वीकारान्न पाकानुपधायककृतिमादाय तादृशः प्रयोगः इति परिहारः तृतीयाग्रन्थोक्तरीत्यनुसारी बोध्यः ।

**अधस्तात्** । द्वितीयायां तृतीयायाञ्च ।

अत्र " अधस्तात् — असाधारणानुकूलत्वं हि यत्ने क्रियायाः संबन्धतया भासते इत्यादिना । तथा च पाकादीनां कृतावसाधारणानुकूलत्वसंबन्धेनान्वयस्येष्टत्वात् पाकानुपधायककृतौ चासाधारणानुकूलत्वं नास्तीति तादृशसंबन्धेन पाकान्वयासंभवात् न पाकानुपधायककृतिमादाय पाकोऽकारि इत्यादिप्रयोगापत्तिरित्यभिप्रायः प्रतीयते (५८९ पृ.) इत्यादर्शः । पूर्वं हि ईश्वरीयकृतेः अस्मत्कर्तृकपाकं प्रति साधारणकारणत्वात् तामादाय ईश्वरः पचतीति प्रयोगवारणाय धात्वर्थस्याख्यातार्थे कृतौ असाधारणानुकूलत्वं संबन्धतया भासते इति केषांचिदभिप्रायो वर्णितो भट्टाचार्यैः । न हि प्रकृते धात्वर्थस्याख्यातार्थकृतौ असाधारणानुकूलत्वस्य संबन्धतया भानस्योपयोगोऽस्ति । अपि च तादृशसंबन्धेन पाकान्वयासंभवात् इत्यनेन

75. एवं नास्ति (ब. कृ.)

**कर्तृत्वकर्मत्ववत्[76] कालविशेषेऽनुशिष्टा लडादयः कालविशेषमपि बोधयन्ति । तत्र लट्प्रत्ययस्य वर्तमानकाले शक्तिः पचतीत्यादौ**

विवरणम्

पाकानुपधायककृतिमादाय पचतीति प्रयोगप्रसङ्ग एव वारयितुं शक्यते । न तु पाकोऽकारि इति । नह्यत्र प्रथमान्तपाकपदार्थः आख्यातार्थकृतावन्वेति । तस्मादेवं विवरणं न समञ्जसं प्रतिभाति । परन्तु तृतीयाविभक्त्यर्थविचारे "चैत्रः पचतीत्यादौ विषयताघटितकर्तृत्वबोधनिर्वाहाय यथा कृतौ पाकादेः उपधायकत्वविषयित्वोभयसंबन्धेनान्वयः । विषयितायाः संबन्धत्वेऽपि उपधायकत्वनिवेश आवश्यकः पाकाद्यनिष्पत्तिस्थले पचतीत्यादिप्रयोगस्य प्रामाण्यवारकत्वात् । तथा चैत्रेण पच्यते इत्यादावपि तृतीयार्थकृतेः जन्यत्वविषयत्वोभयसंबन्धेनान्वयो बोध्यः ....... कृतिविषयत्वमेव वा तृतीयार्थः । स्वनिरूपकजन्यत्वं विषयतायाः संबन्धमध्येऽन्तर्भावनीयम्" इति प्रतिपादितं भट्टाचार्यैः । सैव रीतिरत्राभिमता । इत्थञ्च अकारि इत्यत्र प्रत्ययार्थविषयत्वस्य स्वनिरूपकोपधेयत्वविशिष्टाश्रयत्वसंबन्धेन पाकेऽन्वयः । कृञर्थपाकानुपधायककृतेः स्वोपधेयत्वं पाके बाधितमिति तद्वाक्यस्य प्रामाण्यं परिहरणीयमिति ध्येयम् ।

एतावता लकारार्थकर्तृत्वकर्मत्वे तदन्वयबोधप्रकारञ्च सपरिकरं निरूप्य, लकारार्थकालविशेषं तदन्वयञ्च निरूपयितुमारभते **कर्तृत्वकर्मत्ववदिति** ।

प्रथमोद्दिष्टलडर्थान्वयिनं दर्शयति **पचतीत्यादाविति** ।

76. कर्तृकर्मवत् (का. आ.) कर्तृकर्मत्ववत् (ब.)

**कृत्यादिरूपव्यापारबोधकप्रत्ययोपस्थाप्यकालस्तादृशव्यापारे एवान्वेति न तु क्रियायाम् ।**

**यदा पुरुषो यत्न शून्यः[77] तदधीनाग्निसंयोगादिरूपः पच्यादेरर्थः।**

विवरणम्

यत्राख्यातेन कृत्यादिर्न बोध्यते तत्र जानातीत्यादौ स्वमतेऽपि लकारार्थवर्तमानकालस्य क्रियायामन्वयादाह — **कृत्यादिरूपव्यापार-बोधकप्रत्ययोपस्थाप्येति** ।

**तादृशव्यापारेति** । कृत्यादिरूपव्यापारेत्यर्थः । एकपदार्थयोरपि कृतिकालयोरन्वयो व्युत्पत्तिवैचित्र्यात् ।

धात्वर्थव्यापारे लडर्थवर्तमानकालान्वयः इति वैयाकरणमतं दूषयति— **न तु क्रियायामिति** ।

**अग्निसंयोगादिरूप इति** । अत एव प्राचीनानां पाकजा गुणा इत्यादौ रूपादिपरावृत्तिफलके तेजस्संयोगे पाकशब्दप्रयोग उपपद्यते । उपपद्यते च परमाणवः पच्यन्ते इत्याचार्यवचनम् । विक्लित्त्यनुकूलव्यापारस्य तदर्थत्वे निरवयवेषु परमाणुषु अवयवविभागरूपविक्लित्तेरयोगेन तत्प्रयोगा-नुपपत्तेः स्फुटत्वात् ।

77. व्यापारशून्यः (ब. कृ.)

**विद्यते तदा अयं न पचतीति प्रयोगात्, अयं पचतीत्युक्ते इदानीमयं पाकयत्नवान्न वा इति संशयनिवृत्तेः, पूर्वापरीभावापन्नस्थाल्यारोपणादि-**

विवरणम्

**न पचतीति प्रयोगादिति** । यत्र यत्नविशेषात्पाको निर्वृत्तः न पुनः यत्नः करिष्यते तत्र न पचतीति प्रयोगो दृश्यते । वर्तमानकालस्य क्रियायामन्वये तत्कर्तृकपाकस्य वर्तमानत्वेन तदभावस्य बाधितत्वात् निरुक्त-प्रयोग अनुपपन्नः स्यात् । कृतौ वर्तमानकालान्वये तदानीं पाकसत्त्वेऽपि पाकानुकूलकृतेरवर्तमानतया तत्प्रयोगोपपत्तिः । एवं तदानीं पचतीति प्रयोगापत्तिश्च दुर्वारा धात्वर्थे कालान्वयपक्षे । तेजस्संयोगस्य धात्वर्थस्य वर्तमानत्वात् । अपि च रूपपरावृत्तिफलकतेजस्संयोगे भविष्यति, तदनुकूले च **यत्ने** वर्तमाने पचतीति प्रयोगो न स्यात् धात्वर्थस्यावर्तमानत्वात् । पक्ष्यतीति च स्यात् धात्वर्थतेजस्संयोगस्यानागतत्वादित्यपि बोध्यम् ।

**संशयनिवृत्तेरिति** । पचतीति वाक्यजन्यस्य बोधस्य पाककृतौ वर्तमानत्वावगाहित्वे एव तादृशसंशयनिवर्तकत्वमिति भावः । **यत्ने** वर्तमानत्वप्रतीतिश्च शाब्द्येव स्वीकार्या नानुमितिः धात्वर्थेन वर्तमान-यत्नानुमानासंभवात् पाकानुकूलयत्नविगमेऽपि पाकस्यानिवृत्तेः । वर्त-मानत्वानुमितेः व्याप्तिज्ञानसापेक्षत्वेन विलम्बितत्वात् झटिति संशयनिवर्त-कत्वानुपपत्तिश्चेति बोध्यम् । व्यापाराणां पच्याद्यर्थघटकत्वेनेत्यभिधानं क्रियायां कालान्वयवादिनां वैयाकरणानां मतेन । स्वमते तेजस्संयोगविशेषस्य पच्यर्थत्वात् । अधिश्रयणाद्यधःश्रयणपर्यन्तः सर्वोऽपि व्यापारः ताद्रूप्येण पचधातुजन्यबोधे भासते । तदादिन्यायेन शक्तिस्वीकारान्न नानार्थतापत्तिरिति वैयाकरणाः । तेजस्संयोगवत् विक्लित्त्यनुकूलव्यापारोऽपि नैयायिकमते पच्यर्थः । अत एव भट्टाचार्याः तत्र तत्र विक्लित्त्यनुकूल-व्यापारस्य पच्यर्थत्वं व्यवहरन्ति इत्यपि वदन्ति ।

**व्यापाराणां विशिष्य पच्याद्यर्थघटकत्वेन प्रत्येकं तद्व्यापारेषु कालान्वय-बोधापेक्षया कृत्यादिरूपैकार्थे तदन्वयस्यैव लाघवेनोचितत्वाच्च ।**

**वर्तमानकालश्च तत्तच्छब्दप्रयोगाधिकरणकालरूपस्त-त्तच्छब्दार्थः । अतो नैककालप्रयुक्तलडादितोऽपरलडादिप्रयोगाधि-करणकालीनत्वस्य कृत्यादावन्वयः । स्वप्रयोगाधिकरणकालत्वेन स्ववाच्यत्वे स्वत्वाननुगमाच्छक्त्यानन्त्यं सामान्यतो व्युत्पत्ते-र्दुर्घटतयाऽपूर्वव्यक्तिबोधानुपपत्तिः सर्वनामविचारदर्शितरीत्या**

विवरणम्

प्रत्येकं तद्व्यापारेषु — स्थाल्यारोपणत्वादिनानाधर्मावच्छिन्नेषु ।

कृत्यादिरूपैकार्थे — कृतित्वरूपैकधर्मावच्छिन्ने ।

एतावता वर्तमानकालान्वयिनं अवधार्य वर्तमानकालस्वरूपं निरूपयितु-मारभते **वर्तमानकालश्चेति** ।

ननु पाकानुकूलातीतकृतिमति चैत्रे चैत्रः पचतीति प्रयोगापत्तिः तादृशकृतौ अन्यदीयलट्प्रयोगाधिकरणकालरूपवर्तमानकालवृत्तित्वस्या-बाधादित्यत आह—**तत्तच्छब्देति** ।

व्युत्पत्तेः — शक्तिग्रहस्य ।

**अपूर्वव्यक्तीति** । पूर्वं यत्र पदशक्तिः गृहीता तस्यैव पदज्ञानेन स्मृतिसंभवः । ययोः पूर्वं संबन्धः गृहीतः तयोरेकज्ञानेन अपरसंबन्धिन एव स्मरणोदयादिति भावः ।

**समाधास्यते । विशिष्य तत्तत्कालत्वावच्छिन्नबोधस्यानुभवसिद्धतया सर्वनामशक्तौ[78] बुद्धिस्थत्ववत् शब्दप्रयोगाधिकरणत्वमुपलक्षणविधया व्यावर्तकं वाच्यम् । न च [79] तत्तत्कालत्वस्यैव[80] मप्यवाच्यत्वे [81] तज्ज्ञानानुपपत्तिरसमाधेयैवेति वाच्यम् । शब्दप्रयोगाधिकरणवृत्ति-कालत्वव्याप्यधर्मत्वेन तत्तत्कालत्वादीनामेवोपलक्षणीयत्वात् ।**

विवरणम्

समाधास्यते इत्युक्तं समाधानप्रकारमाह — **विशिष्येति** ।

**उपलक्षणविधयेति** । इत्थञ्च शाब्दबोधे तत्तच्छब्दप्रयोगाधि-करणत्वं न भासते ।

**तत्तत्कालत्वस्यैवमप्यवाच्यत्वे इति** । शब्दप्रयोगाधिकरणत्वस्य कालोपलक्षणत्वं न तु कालत्वोपलक्षणत्वमिति कालस्यैव वाच्यत्वं न कालत्वस्येति भावः ।

अत्र "शब्दप्रयोगेति, शब्दप्रयोगाधिकरणीभूतो यः कालः तद्वृत्तिर्यः कालत्वव्याप्यधर्मः तेन कालत्वव्याप्यधर्मत्वेन सामान्यरूपेण तत्तत्कालत्वाना-मेव शब्दप्रयोगाधिकरणत्वमुपलक्षणं स्वीक्रियते इति तत्कालत्वस्य वाच्यत्वं प्राप्तमेवेति नापूर्वकालव्यक्तिज्ञानानुपपत्तिः कालत्वेन रूपेण तासामप्याख्यात-

78. बुद्धिस्थत्वादिवत् (ब. कृ.)
79 तत्तत्कालस्य (का. ब. कृ.)
80. एवं सति (ब. कृ.)
81. तद्ज्ञानानुपपत्तिः (ब. कृ.)

**अथ शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मो वर्षत्वादिकमपि ।**

विवरणम्

जन्यबोधविषयत्वसंभवादित्यर्थः प्रतिभाति" (५९१ पृ.) इत्यादर्शः ॥ अत्र तत्तत्कालत्वानामेव शब्दप्रयोगाधिकरणत्वमुपलक्षणमिति विवरणं न समञ्जसम् । यतः कदाचिदप्युपलक्ष्ये अविद्यमानस्य उपलक्षणत्वं न संभवति शब्दप्रयोगाधिकरणत्वन्तु तत्तत्कालस्यैव न तु तत्तत्कालत्वस्य । एवं कालत्वव्याप्यधर्मत्वेन सामान्यधर्मेण तत्तत्कालत्वादीनां शब्दप्रयोगाधिकरणत्वमुपलक्षणमित्युक्त्या उपलक्ष्यतावच्छेदकं सामान्यधर्म इति प्रतीयते । एतच्च किमर्थमभिहितमिति न प्रतीमः । अत एव शब्दप्रयोगाधिकरणत्वमुपलक्षणविधया व्यावर्तकं वाच्यमिति ग्रन्थस्य, शब्दप्रयोगाधिकरणत्वोपलक्षितधर्मावच्छिन्ने शक्तिरिति व्याख्यानमप्यनादेयम् । तस्मात् शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वोपलक्षितधर्मावच्छिन्ने लटः शक्तिः निरुक्तकालत्वव्याप्यधर्मत्वमेव शक्यतावच्छेदकतत्तत्कालत्वानीमनुगमकमुपलक्षणमिति ग्रन्थार्थः । पूर्वपङ्क्तौ शब्दप्रयोगाधिकरणत्वोपलक्षिते काले शक्तिरुक्ता । तत्र च कालत्वस्यावाच्यत्वेन तत्तत्कालत्वेन तद्बोधो न निर्वहतीति निरुक्तोपलक्षितधर्मावच्छिन्ने शक्तिः स्वीकृतेति विभावनीयम् ।

**वर्षत्वादिकमपीति** । तथा च वर्षे कदाचित् पाकानुकूलकृतिमति पाकानुकूलवर्तमानकृतेरबाधात् कृतिशून्यतादशायां पचतीति प्रयोगापत्तिरिति भावः ।

अत्र "पचतीत्युक्ते पाकानुकूलकृतौ वर्षस्याप्यन्वयः स्यात् न च वर्षपर्यन्तं तादृशकृतिरनुवर्तते इत्यर्थः" (५९१-पृ.) इत्यादर्शः ॥ अस्य हि ग्रन्थस्य, पचमानेऽपि पचतीति प्रयोगानुपपत्तिः लडर्थवर्षव्यापित्वस्य

**कालद्वयावृत्तिधर्मत्वनिवेशेऽप्येतद्रूपमासत्वादिव्यावर्तनमशक्यम् ।**

विवरणम्

पाकानुकूलकृतावभावादित्याशयो लक्ष्यते । न चैतद्युज्यते । यतः लडर्थ-वर्तमानकालस्य वर्षस्य आधेयतासंबन्धेन कृतावन्वये विषयाबाधात् अनुपपत्ति-रेव नास्ति । किञ्च तादृशकालत्वव्याप्यधर्मः न केवलं वर्षत्वम् । किन्तु अन्यदपि । एवञ्च वर्षरूपवर्तमानकालस्यैवान्वय इति न नियमः क्षणादि-वर्तमानकालमादाय तत्प्रयोगोपपत्तेः । अत एव वर्षत्वादिकमपीत्यत्रापिशब्दः प्रयुक्तः । तस्मात् वर्षे कदाचित् पाकानुकूलकृतेः सत्त्वे कृत्यनधिकरण-कालेऽपि पाकानुकूलवर्तमानवर्षवृत्तिकृतेः अबाधात् पचतीति प्रयोगापत्ति-रित्येव ग्रन्थाशय इति सुधीभिर्विभावनीयम् ।

**कालद्वयावृत्तीति** । शब्दप्रयोगाधिकरणतदनधिकरणकालद्वयावृत्ती-त्यर्थः । माससमुदायत्वात्मकवर्षत्वस्य शब्दप्रयोगाधिकरणानधिकरणकाल-द्वयवृत्तित्वाद्वारणम् ।

**एतद्रूपमासत्वादीति** । कालद्वयावृत्तिरूपमासत्वेत्यर्थः । न च दिन-समुदायत्वरूपस्य मासत्वस्य कथं कालद्वयावृत्तित्वमिति वाच्यम् । त्रिंशद्दिनस्थायी दण्डादिः मासपदेन विवक्षितः । तत्त्वञ्च अखण्डैकदण्डात्मक-कालवृत्तीति तस्य कालद्वयावृत्तित्वमुपपद्यते । एवमखण्डवर्षत्वादिकमादायाति-प्रसङ्गोऽपि संभवति । सोऽपि धर्मः मासत्वादीत्यत्रादिशब्देन गृह्यते । न च वर्षत्वव्यावर्तकस्य कालद्वयावृत्तित्वस्य वर्षत्वसाधारण्यकथनमसमञ्जस-मिति वाच्यम् । माससमुदायत्वरूपवर्षत्वव्यावर्तकस्यापि तस्य अन्यादृशा-खण्डवर्षत्वसाधारण्ये असामञ्जस्यविरहात् । परन्तु एतद्रूपवर्षत्वादीति लेखनं युक्ततरं प्रतिभाति ।

**क्षणद्वयावृत्तिक्षणवृत्तिधर्मत्वेन तद्व्यावर्तने चाध्ययनाद्यनधिकरणेप्यध्ययनाधिकरणस्थूलकालान्तर्गतक्षणे असमाप्तारब्धाध्ययने पुंसि चिन्तामणिमयमधीते इत्यादिप्रयोगानुपपत्तिः ।**

विवरणम्

**क्षणद्वयावृत्तिक्षणवृत्तिधर्मत्वेनेति** । शक्यतावच्छेदकोपलक्षणेनेत्यादिः । अखण्डमासत्वादेः क्षणद्वयावृत्तित्वेऽपि क्षणवृत्तित्वाभावाद्व्यावृत्तिरिति भावः । क्षणवृत्तित्वमात्रनिवेशे क्षणसमुदायत्ववारणं न संभवतीति क्षणद्वयावृत्तित्वं निवेशितम् ।

**अध्ययनाधिकरणस्थूलकालेति** । प्रकृतग्रन्थाध्ययनारम्भप्रभृतिसमाप्तिपर्यन्तमासवर्षादीत्यर्थः ।

असमाप्तारब्धाध्ययने — असमाप्तं आरब्धमध्ययनं येन तस्मिन् ।

**प्रयोगानुपपत्तिरिति** । शब्दप्रयोगाधिकरणवृत्तिक्षणद्वयावृत्तिक्षणवृत्तिधर्मत्वोपलक्षितधर्मावच्छिन्ने लटः शक्तिस्वीकारे तत्तत्क्षणत्वावच्छिन्नस्यैव लडर्थता पर्यवस्यति । चिन्तामणिग्रन्थाध्ययनारम्भानन्तरं तत्समाप्तिपूर्वकाले विद्यार्थिनो गमनादिकालेऽपि किमयं करोतीति पृष्टे चिन्तामणिमयमधीते इत्युत्तरयन्ति प्रामाणिकाः । तत्प्रयोगस्यानुपपत्तिः शब्दप्रयोगाधिकरणगमनक्षणवृत्तित्वस्य अध्ययनानुकूलकृतौ बाधादित्यर्थः ।

**यदि च — स्वप्रागभावानधिकरणस्वाश्रयकर्तृकप्रकृत-**
**[82] क्रियानाशप्रागभावाधिकरणशब्दप्रयोगाधिकरणकाल एव वर्तमान-कालः आधेयतासंबन्धेन कृतावन्वेति । अतो नोक्तस्थले चिन्तामणि-मयमधीते इत्यादिप्रयोगानुपपत्तिः । आरम्भावधिसमाप्तिपर्यन्तस्य स्थूलकालस्यापि तथात्वेन शब्दप्रयोगाधिकरणक्षणादिरूपान्तरालकाले अध्ययनाद्यनुकूलकृतिविच्छेदेऽपि शब्दप्रयोगाधिकरणत्वोपलक्षित-तादृशस्थूलकालवृत्तित्वस्यापि तादृशक्रियानुकूलकृतावबाधेन योग्यता-निर्वाह इत्युच्यते ।**

विवरणम्

क्रियारम्भप्रभृतिसमाप्तिपर्यन्तस्थूलकालसाधारणं लटः शक्यतावच्छेदकं स्वीकृत्य निरुक्तप्रयोगोपपत्तिं शङ्कते **यदि चेति** ।

**स्वप्रागभावेत्यादि** । अधिकरणान्तद्वयं शब्दप्रयोगाधिकरणकाल-विशेषणम् । अत्र स्वपदद्वयं वर्तमानकालान्वयिकृतिपरम् । अध्ययनारम्भ-पूर्वसमयप्रभृतिसमाप्तिपर्यन्तस्थायिस्थूलकालमादाय अध्ययनारम्भात्पूर्वं अधीते इति प्रयोगवारणाय स्वप्रागभावानधिकरणेति । अध्ययनारम्भप्रभृतिसमाप्त्य-नन्तरसमयव्यापिनं स्थूलकालमादाय समाप्त्यनन्तरमधीते इति प्रयोगवारणाय स्वाश्रयकर्तृकप्रकृतक्रियानाशप्रागभावाधिकरणेति । निरुक्तस्थूलकाले अध्ययन-क्रियानाशस्य वृत्तत्वात् तत्प्रागभावाधिकरणत्वं नास्तीति तद्व्यावृत्तिः । स्वाश्रयकर्तृकप्रकृतक्रियाप्रागभावाधिकरणेति पाठान्तरम् । प्रकृतक्रिया-समाप्त्यनन्तरं क्रियाप्रागभावो नास्ति प्रकृतक्रियया तन्नाशात् । विक्लित्त्यनुकूलचरमव्यापारानुष्ठानपर्यन्तं तत्फलानुकूलतत्तद्व्यापारप्रागभावः अस्तीति समाप्तिपर्यन्तं पचतीति प्रयोग उपपद्यते इति तदाशयः ।

82. क्रियाप्रागभाव (ब.) क्रियास्पन्दप्रागभाव (कृ.)

तदा यः[83] समग्रचिन्तामणिमधीत्य किञ्चित्कालोत्तरं पुनश्चिन्तामणिमध्येष्यते तत्रान्तरालदशायामपि अयं चिन्तामणिमधीते इति प्रयोगापत्तिः ।

यदि स्तुतिपाठादिविच्छेददशायामपि प्रत्यहमयं स्तुतिं पठति इत्यादिवदुक्तस्थलेऽपि दर्शितप्रयोग इष्ट एवेत्युच्यते । तदापि स्वपदेन विशिष्य तत्तत्कृतीनामुपादानेनाननुगमो दुरुद्धर एवेति चेत् ।

न — शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणे-

विवरणम्

अन्तरालदशायामपीत्यादि । प्रथमाध्ययनारम्भप्रभृतिद्वितीयाध्ययनसमाप्तिपर्यन्तस्थायिस्थूलकालस्यापि अध्ययनकृतिप्रागभावानधिकरणत्वात् तत्पुरुषकर्तृकचिन्तामणिकर्मकचरमाध्ययनक्रियानाशप्रागभावाधिकरणत्वाच्च लडर्थतया तमादाय, प्रथमाध्ययनसमाप्त्यनन्तरं द्वितीयाध्ययनारम्भात्पूर्वं अधीते इति प्रयोगापत्तिरित्यर्थः ।

लटः तत्तत्क्षणत्वाद्यवच्छिन्ने एव शक्तिः । अध्ययनारम्भप्रभृतिसमाप्तिपर्यन्तस्थायिस्थूलकालमादाय असमाप्तारब्धाध्ययने पुंसि चिन्तामणिमयमधीते इति प्रयोगस्योपपत्तिः । लडर्थस्य कालस्य कृतौ संबन्धविशेषभाननियमेनैव क्रियारम्भात्पूर्वं समाप्त्युत्तरञ्च अधीते इति प्रयोगवारणसंभवात् लटः शक्यतावच्छेदककोटौ स्वप्रागभावेत्यादिविशेषणद्वयं न दीयते । अतश्चाननुगमो नास्तीत्याशयेन सिद्धान्तमाह — **नेत्यादिना** ।

83. ॰ येन (ब. कृ.)

नानुगतीकृततत्तत्क्षणादिनमासवर्षत्वाद्यवच्छिन्न एव काले लटः शक्तिः।

**क्रियारम्भात्पूर्वं कर्मसमाप्त्युत्तरं च अधीते, पचति इत्यादिप्रयोगवारणाय कृत्यादिरूपव्यापारे तादृशकालस्य, स्ववृत्तिप्रागभावाप्रतियोगित्वस्ववृत्तिध्वंसाप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वाभ्यां विशेषितेनाधेयतासंबन्धेनान्वयनियम उपगन्तव्यः। तत्तत्क्रियारम्भपूर्वमपि तत्समाप्त्युत्तरमपि वा वर्तते यस्तत्तत्क्रियानुकूलकृत्यधिकरणकालस्तस्य दर्शितविशिष्टाधेयतासंबन्धस्तादृशकृतौ बाधितोऽप्रसिद्धो वेति न शब्दप्रयोगाधिकरणतादृशकालमादाय दर्शितप्रयोगापत्तिः। संबन्धे स्वपदार्थस्य विशिष्य निवेशेऽप्युपपत्तिश्चिन्त्या।**

विवरणम्

**तत्तत्क्षणेति।** न पचतीत्यादौ वर्तमानक्षणान्वितस्यैव कृत्यभावस्य बोधः इति क्षणत्वावच्छिन्नेऽपि शक्तिरावश्यकी। क्रियारम्भात्पूर्वं पचतीति प्रयोगवारणाय स्ववृत्तिप्रागभावाप्रतियोगित्वस्य, समाप्त्यनन्तरं तद्वारणाय स्ववृत्तिध्वंसाप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वस्य च संबन्धतया निवेश इति विभागः।

**बाधितः अप्रसिद्धो वेति।** दर्शितसंबन्धद्वयमाधेयत्वञ्चेति त्रितयस्य संबन्धत्वे बाधितः। सामानाधिकरण्येन निरुक्तसंबन्धद्वयविशिष्टाधेयत्वस्य एकस्यैव संबन्धतास्वीकारे अप्रसिद्धिरिति विभागो बोध्यः।

**उपपत्तिश्चिन्त्येति।** स्ववृत्तिप्रागभावप्रतियोगित्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्यैव संबन्धत्वात् संबन्धकोटौ स्वत्वस्य परिचायकत्वान्नानुपपत्तिरिति भावः।

**न च क्रियानुकूलकृतिशून्यान्तरालदशायां स्थूलकालमादाय पचति, अधीते इत्यादिवत् तादृशकृत्यधिकरणक्षणेऽपि स्थूलकालावच्छिन्नाभावमादाय न पचति, नाधीते इत्यादिप्रयोगः । तत्र नञो वर्तमानक्षणमात्रान्विततादृशक्रियानुकूलकृत्यभावबोधकतानियमात् । उक्तरीत्या विशिष्य शब्दप्रयोगाधिकरणक्षणादिरूपकालस्यापि लट्-प्रत्ययेन बोधनसंभवात् ।**

विवरणम्

**न चेति** । नाधीते इति प्रयोगः इत्यनेनान्वेति ।

**स्थूलकालावच्छिन्नाभावमिति** । कृत्यनधिकरणक्षणविशिष्टस्थूलकाले तदभावस्य सत्त्वात् । न च तदात्मनिष्ठे पाकयत्ने तदभावे च कथमेकस्यैव स्थूलकालस्यावच्छेदकत्वमिति शङ्क्यम् । स्थूलकालनिष्ठा कृत्यभावावच्छेदकता कृत्यनधिकरणक्षणावच्छिन्ना, तन्निष्ठा कृत्यवच्छेदकता तु कृत्यधिकरणक्षणावच्छिन्नेति विरोधाभावात् ।

**वर्तमानक्षणमात्रान्वितेति** कृत्यभावविशेषणम् ।

"स्थूलकालगतमैक्यमादाय भूतभविष्यत्कालयोरपि तत्तत्पाकादिक्रियानुकूलकृत्यधिकरणत्वं संभवत्येवेत्यभिप्रायेणोक्तं तत्तत्क्रियानुकूलकृत्यधिकरणकाले इति । बाधित इति । अध्ययने सति भूतभविष्यत्कालस्य संबन्धो बाधितः । यदि चाध्ययनमेवासिद्धम् तदा अप्रसिद्ध इति विवेकः"

विवरणम्

(५९४-पृ.) इत्यादर्शः । अत्र भूतकालस्य भाविकालस्य वा कथं क्रियानुकूलकृत्यधिकरणत्वमित्याशङ्कां परिहर्तुं स्थूलकालगतमैक्यमादायेति ग्रन्थः प्रवृत्तः । तत्र भूतकालपदेन किं क्रियारम्भपूर्वकालप्रभृतिक्रियासमाप्ति-पर्यन्तस्थायी स्थूलकालो विवक्षितः उत क्रियारम्भपूर्वसमयः । आद्ये क्रियानुकूलकृत्यधिकरणत्वमनायासेन घटते इति इत्यभिप्रायेणेत्यभिधाना-सङ्गतिः । द्वितीये तस्य कथमपि तादृशकृत्यधिकरणत्वं न संभवति । न हि तत्कालस्य वर्तमानस्थूलकालस्येव स्थूलत्वाविशेषात् कृत्यधिकरणत्वं वक्तुं शक्यम् । तथा सति सर्वत्र किञ्चित्साम्येन सर्वस्य सत्त्वापत्तेः । तस्मात् प्रकृतक्रियारम्भपूर्वसमयप्रभृतिप्रकृतक्रियासमाप्तिपर्यन्तस्थायी यः स्थूल-कालः एवं क्रियारम्भप्रभृतिसमाप्त्युत्तरसमयपर्यन्तस्थायी यः स्थूलकालः तस्यापि शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वोपलक्षितधर्मावच्छिन्नत्वेन लडर्थ-त्वात् तादृशस्थूलकालाधेयत्वस्य कृतावबाधितत्वात् क्रियारम्भपूर्वकाले समाप्त्युत्तरकाले च अधीते पचतीति प्रयोगापत्तिराशङ्किता । अत एव "क्रियारम्भपूर्वमपि कर्मसमाप्त्युत्तरमपि वा वर्तते यः तत्क्रियानुकूलकृत्यधि-करणकालः" इति ग्रन्थे भट्टाचार्यैरपिशब्दः प्रयुक्तः । तेन स्पष्टं ज्ञायते क्रियारम्भपूर्वप्रभृतिक्रियासमाप्तिपर्यन्तस्थायी स्थूलकाल एव विवक्षित इति । इत्थञ्च तस्य कृत्यधिकरणत्वसमर्थनमनावश्यकमिति विभावनीयम् ।

अपि च, आपत्तिपरिहारावसरे भट्टाचार्योक्तबाधितपदं धृत्वा 'अध्ययने सति भूतभविष्यत्कालसंबन्धः बाधितः यदि चाध्ययनमेवासिद्धं तदाऽप्रसिद्धिः इति विवेकः' इत्यादर्शकाराणां विवरणमपि समालोचनीयमेव । यतः यदा चैत्रोऽधीते तत्पूर्वकाले स्थूलकालविशेषमादाय अधीते इति प्रयोग आपादितः । नत्वध्ययनस्यैवासत्त्वे, अध्ययनानुकूलकृतौ

विवरणम्

लडर्थस्याधेयतासंबन्धाभावेनापत्तेरयोगात् । इत्थञ्च यदा अध्ययनमेवासिद्ध-मित्यादिभाववर्णनं न समञ्जसम् ।

अत्र प्रकरणे शब्दप्रयोगाधिकरणकालवृत्तिकालत्वव्याप्यधर्मो-पलक्षितधर्मावच्छिन्ने शक्तिः इत्यसकृदादर्शकाराणां लेखनं न युज्यते । यतः लटः शक्यतावच्छेदकक्षणत्वदिनत्वादिधर्माणां कालत्वव्याप्यधर्मत्वमेवोप-पलक्षणं न तु तादृशधर्मः क्षणत्वादिषु कालत्वव्याप्यधर्माणामसत्त्वात् । तस्मात् कालत्वव्याप्यधर्मत्वोपलक्षितधर्मावच्छिन्ने शक्तिरिति लेखनीयम् ।

अत्र " किञ्च भावान्वयबोधस्थले यत्किञ्चित्क्षणावच्छेदेनाप्यध्ययनादि-संबन्धसत्त्वे मासमधीते इत्यादिप्रयोगो भवति । अभावान्वय-बोधस्थले तु अभावस्य विवक्षितकालस्य यावत्क्षणकूटेन संबन्धे सत्येव नाधीते इत्यादिप्रयोगो भवति । अन्यथा अध्ययनस्येव अध्ययनाभावस्यापि मासवृत्तिकिञ्चित्क्षणावच्छेदेन संबन्धस्य सत्त्वात् मासमधीते इतिवत् मासं नाधीते इत्यपि प्रयोगः स्यादेव । तथा चात्रापि स्थूलकालस्य यावत्क्षणकूटेन अध्ययनाभावसंबन्धस्यासत्त्वात् नाधीते इत्यादिप्रयोगस्योक्तस्थले आपत्तिर्नास्तीत्यर्थः " (५९४-पृ॰) इत्यादर्शः । वर्तमानक्षणमात्रान्विताभावबोधकत्वनियमादिति ग्रन्थस्य, यावत्क्षणसंबन्धस्य विवक्षितत्वमित्यर्थः न कथमपि वक्तुं शक्यते । परन्तु व्याख्यात्रा किञ्चेत्यादिना स्वाशयः पूरितः । इत्थञ्चान्ते इत्यर्थ इति संपातायातं बोध्यम् । परन्तु स्वाशयोऽपि न समञ्जसः । तथा हि — पाकारम्भप्रभृतिसमाप्तिपर्यन्तं सर्वदा पचतीति व्यवहार इष्यते । अत एव प्रारब्धापरिसमाप्तत्वं वर्तमानत्वमिति वैयाकरणाः ।

**नञ्समभिव्याहारस्थलेऽपि प्रतियोगिन्येव कालान्वयः इति तु न सत् । तत्तत्क्षणवृत्तिपाकादिकृतेरभावस्यान्यक्षणावच्छेदेन तदानीन्तनस्थूलकालावच्छेदेन तादृशकृतिमति सत्त्वेनोक्तातिप्रसङ्गस्य दुर्वारत्वात् । न च कालानवच्छिन्नाधारतासंबन्धेन नञर्थस्य पुरुषेऽन्वयान्नोक्तातिप्रसङ्ग इति वाच्यम् ॥**

विवरणम्

स्थूलकालमध्ये यस्मिन् क्षणे पाककृतिर्नास्ति, तस्मिन् क्षणे न पचतीति प्रयोगोऽपीष्यते । अत एवानुपदं वक्ष्यन्ति भट्टाचार्याः "तादृशस्थूलकाले यत्रात्मनि पाककृतिः तादृशकालान्तर्गततादृशकृत्यनधिकरणक्षणे न पचतीति प्रयोगोपपत्तये" इत्यादिकम् । यदि नञ्समभिव्याहारस्थले यावत्क्षणकूटसंबन्धो विवक्ष्यते । तदा कृत्यभावे स्थूलकालान्तर्गतकृत्याधिकरणक्षणसंबन्धासत्त्वेन यावत्क्षणसंबन्धस्य बाधितत्वात्स प्रयोगो नोपपद्येत । तस्मादेतादृशाशयवर्णनं न समञ्जसम् ।

तदानीन्तनस्थूलकालावच्छेदेन कृतिमति पुंसि अन्यक्षणावच्छेदेन कृतेरभावस्य सत्त्वेनेति योजना ।

अन्यक्षणः — कृत्यनधिकरणक्षणः ।

उक्तातिप्रसङ्गस्य—कृत्याधिकरणक्षणेऽपि न पचतीति प्रयोगप्रसङ्गस्य ।

**कालानवच्छिन्नाधारतेति** । पाककृतिमति तदभावाधारता कृत्यनधिकरणक्षणावच्छिन्ना । प्रतियोग्यभावयोरेकावच्छेदेनैकत्रावृत्तित्वरूपविरोध-

विवरणम्

नियमादिति नातिप्रसङ्गः । पाककृतिशून्ये च कृत्यभावाधिकरणता कालानवच्छिन्नेति न पचतीति प्रयोगश्चोपपद्यते इति भावः ।

अत्र "वस्तुतस्तु नञ्समभिव्याहारस्थले प्रतियोगिनि कालान्वयस्वीकारे न पचति इत्यनेन शब्दप्रयोगाधिकरणतत्क्षणावच्छिन्नायाः पाककृतेरभावो बोधनीयः । न च तत्क्षणे कृतिः संभवति तदभावस्यैव सत्त्वादिति सर्वत्रैव प्रतियोग्यप्रसिद्धिः । तत्क्षणे कृतिसत्त्वे च तदभावा-संभवात् तद्बोधनं न संभवतीति विज्ञेयम् ।" इत्यादर्शः । सर्वत्र वर्तमानक्षणावच्छिन्नपाककृतेरप्रसिद्धिर्न संभवति । तस्मिन्नेव क्षणे पाककृतेः पुरुषान्तरे सत्त्वात् । यदि प्रथमान्तार्थपुरुषविशेषवृत्तित्वविशिष्टवर्तमान-क्षणावच्छिन्ना पाककृतिः प्रतियोगितया भासेत तदैवाप्रसिद्धिः सर्वत्र भवेत् । यदा तादृशप्रयोगः तस्मिन् क्षणे तत्र पुरुषे पाककृतेरसत्त्वात् । परन्तु न तथा कृतिर्भासते । प्रथमान्तार्थस्य मुख्यविशेष्यतया आख्यातार्थकृतावविशेषणत्वात् । अपि च तथा भानस्वीकारे यत्कर्तृकः पाक एव न प्रसिद्ध्यति तादृशः राजा न पचति इति वाक्यमप्रमाणं स्यात् । प्रथमान्तार्थराजवृत्तिवर्तमानपाककृतिरूप-प्रतियोगिनः अप्रसिद्धत्वेन तदभावबोधनासंभवात् । तस्मात् पाककृत्य-भाववान् राजा इति तत्र शाब्दबोधः । पाककृतिश्च पुरुषान्तरे प्रसिद्धेति राज्ञि तदभावस्याबाधितस्य बोधकं तद्वाक्यं प्रमाणं संपद्यते । इत्थञ्च वर्तमानक्षणावच्छिन्नपाकानुकूलकृतिः पुरुषान्तरे प्रसिद्ध्यत्येव । परन्तु यस्मिन् क्षणे पाककृतिः कुत्रापि न प्रसिद्ध्यति तत्र स्थलविशेषे एवाप्रसिद्धिः संभवतीति भट्टाचार्यैः क्वचित् इत्युक्तमिति ध्येयम् ।

**तादृशस्थूलकाले यत्रात्मनि पाकादिकृतिः तादृशकालान्तर्गत-तादृशकृत्यनधिकरणक्षणे न पचतीत्यादिप्रयोगोपपत्तये तत्तत्क्षणा-वच्छिन्नपाकादिकृत्यभावबोधस्यैव तत्र तत्र स्वीकरणीयतया क्वचित्प्रतियोग्यप्रसिद्धेर्दुर्वारत्वात् ।**

विवरणम्

**प्रयोगोपपत्तये इति** । पाकारम्भप्रभृतिसमाप्तिपर्यन्तस्थूलकाला-न्तर्गते सर्वस्मिन्नपि क्षणे पचतीति व्यवहारो दृश्यते । तदन्तर्गते कृत्यनधिकरणक्षणे लडर्थस्थूलकालवृत्तिकृतिमादाय पचतीति व्यवहार उपपादनीयः । एवं तस्मिन्नेव क्षणे न पचतीति प्रयोगोऽपि दृश्यते तत्क्षणावच्छेदेन कृत्यभावसत्त्वात् । यदि कृतौ लडर्थस्थूलकालावच्छिन्नत्वं भासते तदा तदवच्छिन्नकृतेरभावः तस्मिन् कृत्यनधिकरणक्षणावच्छिन्ना-धारतासंबन्धेनैव वर्तते इति निरुक्तसंबन्धस्य बाधितत्वात् तदनुपपत्तिः । शब्दप्रयोगाधिकरणक्षणावच्छिन्नकृतिप्रतियोगिकाभावभाने तु तत्क्षणावच्छिन्ना पाककृतिः अन्यदीयैव । तदभावश्च प्रतियोग्यनधिकरणे पुंसि काला-नवच्छिन्नाधारतासंबन्धेन वर्तते इति तत्प्रयोगोपपत्तिरिति भावः ।

**क्वचित्प्रतियोग्यप्रसिद्धेरिति** । यत्र क्षणे चैत्रो न पचति तत्क्षणे कुत्रापि पाककृतिर्नास्ति तदानीं प्रयुक्तस्य न पचतीति वाक्यस्य प्रामाण्यं न स्यात् तत्क्षणावच्छिन्नपाककृतेरप्रसिद्ध्या तदभावस्य सुतरामप्रसिद्धत्वेन बोधनासंभवादिति भावः ।

**व्यापाराबोधकेन लडादिप्रत्ययेन क्रियायामेव वर्तमानत्वान्वयो बोध्यते जानातीत्यादौ, न तु लडर्थाश्रयत्वादौ । ज्ञानाद्यसत्त्वेऽपि तदाश्रयत्वादिसंबन्धे सति जानातीत्यादिप्रयोगापत्तेः । ज्ञानादिविशिष्टे आश्रयत्वादौ कालान्वयमुपगम्यातिप्रसङ्गवारणे, विशेषणे ज्ञानादावपि तदन्वयस्यावश्यकत्वे तस्यैव स्वीकारौचित्यात् ।**

**नश्यतीत्यादौ क्रियायां कालान्वयस्वीकारे विनष्टादावपि**

विवरणम्

लडर्थस्य आख्यातार्थकृतावन्वयमुपपाद्य, धात्वर्थे तदन्वयमुपपादयति — **व्यापाराबोधकेनेति ।**

**तदाश्रयत्वरूपसंबन्धे सतीति ।** ज्ञानाधारता समवायसंबन्धावच्छिन्ना । सा च समवायरूपा । तत्तत्संबन्धावच्छिन्नाधारतायाः तत्तत्संबन्धरूपतायाः सप्तम्यर्थनिरूपणे प्रतिपादितत्वात् । इत्थञ्च समवायस्यैकत्वात् ज्ञानासत्त्वेऽप्यात्मनि ज्ञानसमवायरूपमाश्रयत्वं वर्तते रूपविरहिण्यपि वायौ रूपसमवायसत्त्ववदिति बोध्यम् । तस्यैवेत्येवकारेण आश्रयत्वेऽन्वयस्य व्यवच्छेदः । न जानातीत्यादौ लडर्थः कालः धात्वर्थान्विते नञर्थेऽभावेऽन्वेतीति तृतीयाविचारोक्तमनुसन्धेयम् ।

ननु व्यापाराबोधकप्रतियोगित्वबोधकाख्यातसमभिव्याहृते नश्यतीत्यादौ धात्वर्थे नाशे वर्तमानकालान्वयो वाच्यः । इत्थञ्च ध्वंसाप्रतियोगिनि ध्वंसे चिरोत्पन्नेऽपि वर्तमानकालावच्छिन्नत्वस्याबाधात् चिरविनष्टेऽपि घटे नश्यतीति प्रयोगापत्तिरित्याशङ्कायां दीधितिकृन्मतमाह — **नश्यतीत्यादाविति ।**

**नश्यति इत्यादिप्रयोगः स्यादिति तत्रोत्पत्तेरपि लडाद्यर्थत्वमुपगम्य तत्रैव कालान्वयं दीधितिकृदुपजगाम ।**

**वस्तुतस्तु नाशत्वमुत्पत्तिमदभावत्वम् । तथा च धातुप्रतिपाद्यतावच्छेदकोत्पत्तावेव कालान्वयः इत्येव साधीयः ।**

विवरणम्

तत्रैव — लडर्थोत्पत्तावेव ।

वर्तमानकालान्वितोत्पत्तेश्च धात्वर्थे नाशेऽन्वयः । लाघवादाह— **वस्तुतस्त्विति** । विचारतस्त्वित्यर्थः ।

अत्र "एवमेव भविष्यतीत्यत्रापि भविष्यत्कालस्योत्पत्तावेवान्वयो विज्ञेयः न तु घटे । अन्यथा वर्तमानघटमादायापि तस्य भाविकालसंबन्धसत्त्वेन भविष्यतीति प्रयोगः स्यात् । न चैतदिष्टम् । अनुत्पन्नघटमुद्दिश्यैव भविष्यतीति प्रयोगस्येष्टत्वादिति सारः" -(५९८-पृ.) इत्यादर्शः । आख्यातबोध्यस्य कालस्य आख्यातार्थव्यापारे आख्यातेन व्यापाराबोधनस्थले धात्वर्थे धात्वर्थतावच्छेदकोत्पत्तौ, नञ्समभिव्याहारे धात्वर्थेन धात्वर्थान्विताख्यातार्थेन वान्विते नञर्थाभावे, चान्वयो व्युत्पन्नः । न तु प्रथमान्तपदार्थे । इत्थञ्च घटो भविष्यतीत्यादौ आख्यातस्य व्यापाराबोधकत्वात् आख्यातार्थकालस्य धात्वर्थे उत्पत्तावेवान्वयो व्युत्पन्नः । प्रथमान्तार्थे अन्वय एव न प्रसज्यते । तस्मात् प्रथमान्तार्थं विहाय धात्वर्थोत्पत्तौ अनागतत्वान्वये हेतुवर्णनं नातीव श्लिष्टं भाति ।

**वर्तमानकालस्योत्पत्तिसंबन्धेन धात्वर्थेऽन्वयः इत्यपि वदन्ति।**

**लट्प्रत्ययेन पक्ष्यतीत्यादौ प्रत्ययार्थकृतौ, ज्ञास्यतीत्यादौ**

विवरणम्

विनैवैकदेशान्वयं अतिप्रसङ्गं परिहरतां मतमाह — **वर्तमानकालस्येति** ।

घटो नष्टः न नश्यतीत्यादौ उत्पत्तिसंबन्धेन वर्तमानकालाभावस्य धात्वर्थे नाशे बोधनं न संभवति । उत्पत्तिसंबन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वादित्यस्वरसः वदन्तीत्यनेन सूचितः ।

अत्र, केवलातीतत्वस्य लुङर्थस्य निरूपणानन्तरं अनद्यतनत्वसहितस्य तस्य लङर्थस्य निरूपणे, तदनन्तरञ्च परोक्षत्वसहितस्य तस्य लिडर्थस्य प्रतिपादने उक्तिलाघवम् । एवं केवलानागतत्वस्य लृडर्थस्य निरूपणानन्तरं अनद्यतनत्वसहितस्य तस्य लुडर्थस्य निरूपणे लाघवमित्यभिसन्धाय भट्टाचार्यैः लकारार्थनिरूपणे अनुबन्धक्रमं विहाय अन्यादृशः क्रमः स्वीकृतः । विचारणीयांशाधिक्यात् अन्ते लिङर्थविचारः योजितः इति बोध्यम् ।

लृडर्थं निरूप्य केवलानागतत्वबोधकस्य लृटः अर्थं निरूपयति — **लट्प्रत्ययेनेति** ।

**क्रियायां भविष्यत्त्वं प्रत्याय्यते। यद्यपि भुवः उत्पत्त्यर्थकतया अनागतकालोत्पत्तिकत्वं भविष्यच्छब्दार्थः। तथापि पक्ष्यतीत्यादौ [84] प्रत्ययार्थकृत्यादावनागतत्वमात्रस्य प्रतीतिरुपेयते उत्पत्तिप्रतीतेर्निष्फलत्वात्। भविष्यति उत्पत्स्यते इत्यादौ च धातुनैव तादृशोत्पत्तिः प्रत्याय्यते। नङ्क्ष्यतीत्यादौ च दर्शिता गतिः।**

विवरणम्

भुवः — भूधातोः।

**उत्पत्तिप्रतीतेर्निष्फलत्वादिति**। आख्यातार्थकृतेः दीर्घकालावस्थानासंभवात् वर्तमानकृतेः अनागतकालवृत्तित्वमादाय पचतीत्यादौ पक्ष्यतीति प्रयोगापत्तेरसंभवादिति भावः।

नन्वेवं अनागतत्वमात्रस्य ऌटा बोधने भविष्यतीत्यादौ अनागतकालोत्पत्तिः कथं प्रतीयते इत्यत आह — **भविष्यतीति**।

**दर्शिता गतिरिति**। इदानीमुत्पन्नस्यापि नाशस्य ध्वंसाप्रतियोगिनः अनागतकालेऽपि सत्त्वात् नश्यमानेऽपि नङ्क्ष्यतीति प्रयोगवारणाय ऌडर्थस्यानागतकालस्य नशधात्वर्थतावच्छेदकोत्पत्तौ, किं वा उत्पत्तिसंबन्धेन नशधात्वर्थे नाशे अन्वयस्वीकाररूपा गतिरित्यर्थः।

84. कृत्यादौ (ब. कृ.)

**तथा च वर्तमानप्रागभावप्रतियोगित्वं प्रतियोगितासंबन्धेनान्वयी वर्तमानप्रागभावो वा लट्प्रत्ययार्थः ।**

**प्रागभावानङ्गीकारे वर्तमानकालध्वंस एव तदर्थः । ध्वंसस्य कालोपाधित्वेन [85] स्वसमानकालपदार्थाधारतया आधेयता-**

विवरणम्

अनागतकालस्य प्रत्ययार्थत्वे तस्याधेयतया कृतावन्वयो वाच्यः । एवञ्च वर्तमानप्रागभावप्रतियोगित्वविशिष्टकालवृत्तित्वस्य बोधस्वीकारे गौरव-मिति कृत्यन्वयिनः वर्तमानप्रागभावप्रतियोगित्वस्य लडर्थतामाह — **वर्तमानेति ।**

प्रागभावे वर्तमानत्वं शब्दप्रयोगाधिकरणक्षणवृत्तित्वम् । लाघवा-दाह — **प्रतियोगितासंबन्धेनेति ।**

ध्वंसस्याधेयतासंबन्धेन उत्पत्तिसंबन्धेन वा कृत्यादावन्वयः इति योजना । तत्र ध्वंसे कृतिसत्त्वे एव ध्वंसस्य तत्राधेयतासंबन्धः संभवतीति तस्यानागतकृत्याधारत्वमुपपादयति — **कालोपाधित्वेनेति ।**

85. स्वसमानकालपदार्थाधारतया अनागतकृतेः वर्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन कृत्यादावन्वयः (ब. कृ.)

**संबन्धेन, अनागतकृतेर्वर्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन वा कृत्यादावन्वयः ।**

विवरणम्

एवञ्च कालविधया वर्तमानध्वंसस्य कालिकसंबन्धावच्छिन्नमाधारत्वमनागतकृतिनिरूपितं वर्तते । उत्पत्तिसंबन्धेनान्वये योग्यतामुपपादयति — **अनागतकृतेरिति** । कालविधया ध्वंसस्य अनागतकृत्युत्पत्त्याधारत्वादिति भावः ।

पूर्वमाख्यातार्थकृतौ अनागतोत्पत्तिकत्वप्रतीतेर्निष्फलत्वस्योक्तत्वात्, अत्र उत्पत्तिसंबन्धेन कृत्यादावन्वयकथनं, नङ्क्ष्यतीत्यादौ धात्वर्थे नाशे वर्तमानध्वंसस्योत्पत्तिसंबन्धेनान्वयव्युत्पादनतात्पर्यकमवसेयम् । अत एव निष्कर्षे 'वर्तमानकालध्वंसस्य तदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयतासंबन्धेन कृत्यंशे अन्वयोपगमे अतिप्रसङ्गविरहात्' इति वक्ष्यति । 'ध्वंसस्य कालोपाधित्वेन स्वसमानकालपदार्थाधारतया अनागतकृतेः वर्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन कृत्यादावन्वयः' इति पाठान्तरम् । तच्च, उत्पत्तिसंबन्धेनान्वययोग्यतामुपपादयति—अनागतकृतेः वर्तमानकालध्वंसोत्पत्तिमत्तयेति । तदाधारस्यैव तदुत्पत्त्याधारत्वात् उत्पत्त्याधारतानिर्वाहकं तदाधारत्वमुपपादयति—कालोपाधित्वेन स्वसमानकालपदार्थाधारतयेति इति व्याख्येयम् ।

अत्र "ननु प्रागभावो हि स्वप्रतियोगिसमवायिकारणे एव भवति नान्यत्र । नाशश्च ध्वंस एव । ध्वंसस्य च न समवायिकारणं

विवरणम्

किमपि भवति यत्र ध्वंसरूपनाशस्य प्रागभावः संभवेदिति नङ्क्ष्यतीत्यत्र कथं नाशस्य वर्तमानप्रागभावप्रतियोगित्वं स्यादित्याशङ्क्याह—**प्रागभावानङ्गीकारे इति** नाशस्येत्यादिः । नाशस्य प्रागभावानङ्गीकारे हि वर्तमानकालस्य ध्वंस एव लडर्थ." (५९८ पृ.) इत्यादर्शः । घटादीनां प्रागभावं स्वीकृत्य निरुक्तानुपपत्त्या नाशस्य प्रागभावास्वीकारेणावतरणं न युज्यते । प्रागभावाङ्गीकारानङ्गीकारमतभेतेऽपि ध्वंसाङ्गीकारे विमतिर्नास्ति । प्रतियोग्युत्पत्ता प्रागभावो नश्यति । प्रागभावस्येव ध्वंसस्यापि स्वप्रतियोगिसमवायिकारणदेशवृत्तित्वमेव । प्रागभावस्य च समवायिकारणं नास्ति । एवञ्च प्रागभावध्वंसः कुत्र वर्तेतेति प्रागभावस्य ध्वंसोऽपि न स्यादिति प्रागभावस्य नित्यत्वापत्तिः । तस्मात् भावप्रतियोगिकयोरेव ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिकारणदेशवृत्तित्वमिति नियमः । ध्वंसप्रागभावः प्रागभावध्वंसश्च काले एव वर्तेते । तावुभावपि प्रतियोगिरूपावित्यपि वदन्ति । तस्मान्नानया युक्त्या नाशस्य प्रागभावनिराकरणं संभवति । किञ्च अनुपदमेव भट्टाचार्यैः नङ्क्ष्यतीत्यादौ च दर्शिता गतिरिति ग्रन्थेन आख्यातार्थकालस्योत्पत्तावन्वयोऽभिहितो न नाशे । इत्थञ्च तदनन्तरं नङ्क्ष्यतीत्यादौ नाशे वर्तमानप्रागभावप्रतियोगित्वान्वयो न संभवतीत्याशङ्कैव नोदेतीति एवमवतरणं न हृदयङ्गमम् । परन्तु नव्यनैयायिकैः प्रागभावानङ्गीकारात् तन्मते प्रागभावस्यैवाप्रसिद्ध्या वर्तमानप्रागभावस्य लडर्थत्वं विहाय वर्तमानकालध्वंसस्य तदर्थत्वमभिहितम् । दृश्यते चेयं रीतिः सर्वत्र प्रागभावघटितपरिष्कारानन्तरं प्रागभावानङ्गीकारपक्षे ध्वंसघटितपरिष्कारवर्णनमिति । इति सुधीभिर्विभावनीयम् ।

विवरणम्

"किं वा तादृशानागतकृतौ या वर्तमानकालध्वंसस्योत्पत्तिः तत्संबन्धेन तादृशानागतकृत्यादौ वर्तमानकालध्वंसस्यान्वयो भविष्यति । भाविपदार्थानां बौद्धत्वेन सत्त्वं स्वीकृत्य एष विचारो ज्ञेयः" (५९८-पृ·) इत्यादर्शः । अनागतकृतिरनागतकाले उत्पद्यते । वर्तमान-कालध्वंसश्च कालोपाधितया कालविधया अनागतकृत्युत्पत्त्याधारः । इत्थञ्च वर्तमानध्वंसे कालिकसंबन्धेनानागतकृतिरुत्पद्यते । नत्वनागतकृतौ वर्तमान-कालध्वंस उत्पद्यते । ध्वस्ते हि वर्तमानकाले अनागतकृतिरुत्पद्यते । नत्वनागतकृत्युत्पत्त्यनन्तरं वर्तमानकालध्वंसो जायते येनानागतकृतौ ध्वंस उत्पद्येत । किञ्च उत्पत्त्याधारस्य उत्पद्यमाने उत्पत्तिसंबन्धेनान्वयो युज्यते । यदि अनागतकृतौ वर्तमानध्वंस उत्पद्यते । तदा उत्पद्यमानस्य ध्वंसस्य उत्पत्त्याधारे कृतावन्वयो भवेत् तच्च न युज्यते । परन्तु उत्पत्त्याधारस्यैव उत्पत्तिसंबन्धेन उत्पद्यमानेऽन्वयो युज्यते । अत एव नश्यतीत्यत्र लडर्थवर्तमानकालस्य उत्पत्तिसंबन्धेन नाशेऽन्वय उपक्षिप्तः । काले नाश उत्पद्यते न तु नाशे काल उत्पद्यते । तस्मात् वर्तमानध्वंसे अनागतकृतेरुत्पद्यमानत्वात् वर्तमानध्वंसः उत्पत्तिसंबन्धेन कृतावन्वेतीति बोध्यम् । इत्थञ्च वर्तमानकालध्वंसोत्पत्तिमत्तयेत्यत्र ध्वंसे उत्पत्तिरिति सप्तमीसमासः न तु ध्वंसस्योत्पत्तिरिति षष्ठीसमासः । पदार्थान्वयकाले न पदार्थानां सत्त्वमपेक्षितं रामः आसीदित्यादिव्यवहारकाले न रामादीनां सत्त्वम् । एवञ्च भाविपदार्थानां बौद्धत्वेन सत्त्वमङ्गीकृत्य एष विचारः इति लेखनं न युज्यते । बौद्धपदार्थस्य नैयायिकैरनङ्गीकारा-दपसिद्धान्तश्चेति विभावनीयम् ।

**अथ पचमानेऽप्युदीच्यपाकानुकूलकृतिमादाय पक्ष्यतीत्यादिप्रयोगापत्तिः । पाकानुकूलकृतित्वावच्छेदेन च अनागतत्वबोधस्वीकारो न संभवति पूर्वपूर्वपाकानुकूलकृतौ तद्बाधात् पक्ष्यमाणेऽपि पक्ष्यतीति प्रयोगानुपपत्तेः । तत्तत्पाकानुकूलकृतित्वावच्छेदेनापि तदन्वयासंभवः । तत्तत्पाकत्वेन पदादनुपस्थितेः ।**

विवरणम्

उदीच्यपाकानुकूलकृतिम् —अनागतकालावच्छिन्नां प्रकृतपाकक्रियानुकूलां कृतिम् । पाकारम्भप्रभृतिसमाप्तिपर्यन्तकाले पचतीति व्यवहारः । तुषविमोकाद्यनुकूलकृतिवर्तमानतादशायां मण्डस्रावणाद्यनुकूलायाः अनागतकृतेः तस्मिन् सत्त्वात् पक्ष्यतीति प्रयोगापत्तिरिति भावः ।

धात्वर्थान्विताख्यातार्थकृतित्वावच्छेदेन अनागतत्वान्वयस्वीकारे, पाकमध्यदशायां पाककृतिसामान्यान्तर्गतायां वर्तमानकृतौ अनागतत्वबाधेनैव पक्ष्यतीति प्रयोगप्रामाण्यवारणसंभव इत्याशङ्क्याह—**पाकानुकूलकृतित्वावच्छेदेनेति** ।

**पदादनुपस्थितेरिति** । अपदार्थस्य शाब्दबोधे प्रकारतया भानाभावनियमादिति भावः ।

**नापि यत्किञ्चित्पाकानुकूलाद्यकृतित्वावच्छेदेन तदन्वयः,**

विवरणम्

**यत्किञ्चित्पाकानुकूलाद्यकृतित्वावच्छेदेनेति** । पाकानुकूल-यत्किञ्चिदाद्यकृतावन्वयः इत्यर्थः । पाकानुकूलाद्यकृतिसामान्ये अनागतत्व-बाधात् पक्ष्यत्यपि पक्ष्यतीति प्रयोगो न स्यात् । अतः यत्किञ्चित्वं कृतिविशेषणम् । पाकानुकूलाद्यकृतिगतं तद्व्यक्तित्वमेवानागतत्वान्वयिता-वच्छेदकमिति बोधनाय तादृशकृतित्वावच्छेदेनेति ।

अत्र "ननु यत्किञ्चित्पाकानुकूला या आद्या कृतिः तत्र लृडर्थ-भविष्यत्त्वस्यान्वयं स्वीकुर्मः। तथा च पचमानपुरुषकर्तृकपाकानुकूलायामुदीच्य-कृतौ भविष्यत्त्वस्य सत्त्वेऽपि आद्यकृतौ भविष्यत्त्वं नास्ति तस्या जातत्वादिति न पचमाने पक्ष्यतीति प्रयोगापत्तिः...... इत्याशङ्क्याह — **नापीति** । किञ्चात्र पक्षे पाककृतिव्यक्तीनां तत्तद्व्यक्तित्वेन ग्रहणे प्राप्ते ह्यननुगमः स्यादित्याह तत्तद्व्यक्तिमिति" (५९९-पृ) इत्यादर्शः ॥ अत्र यत्किञ्चित्वं यदि पाकविशेषणतया अभिमतं तदा आद्यत्वविशेषणोपादानं व्यर्थं स्यात् । यत्किञ्चित्पाकानुकूलकृतित्वावच्छेदेन भविष्यत्त्वान्वय-स्वीकारेणैव, पचमाने, पक्ष्यतीति प्रयोगवारणसंभवात् । अनुपदमेव तत्पाकानुकूलकृतित्वावच्छेदेनान्वयस्याशङ्कितत्वात्पुनरपि पाके एव तद्व्यक्तित्वपर्यवसितं यत्किञ्चित्वं निवेश्य शङ्काया अनुचितत्वाच्च । अपि चैवं व्याख्याने कृतौ यत्किञ्चित्वस्याभानात् पाककृतिव्यक्तीनां तद्व्यक्तित्वेन ग्रहणं प्राप्तमिति कथं वक्तुं शक्यते । तस्मात् किञ्चात्र पक्षे इत्यादिना तत्तद्व्यक्तिमिति ग्रन्थावतारणं न समञ्जसम् ।

परन्तु पाकानुकूलाद्यकृतित्वावच्छेदेन भविष्यत्त्वान्वये पक्ष्यत्यपि पक्ष्यतीति प्रयोगो न स्यात् । अतीतपाकानुकूलाद्यकृतौ भविष्यत्त्वबाधादिति

**आद्यत्वोपस्थापकपदाभावात् । तत्तद्व्यक्तिमनन्तर्भाव्य दुर्वचत्वाच्चेति चेत् । न ।**

विवरणम्

आद्यकृतौ यत्किञ्चित्त्वविशेषणम् । इत्थञ्च पाकानुकूलाद्या यत्किञ्चित्कृतिः तत्त्वावच्छेदेनान्वयः इति शङ्का फलिता । कृतौ यत्किञ्चित्त्वविशेषणदाने तादृशकृतित्वावच्छेदेनान्वयस्वीकारो व्यर्थः । तथा स्वीकाराभावेऽपि पचमाने, पक्ष्यतीति प्रयोगवारणसंभवात् । तथापि भविष्यत्त्वान्वयितावच्छेदकं यत्किञ्चित्पाकानुकूलाद्यकृतित्वमिति सूचनाय तथाभिहितम् । आद्यत्वोपस्थापकपदाभावेन आद्यत्वघटितधर्मस्यान्वयितावच्छेदकत्वे दूषिते सति, आद्यत्वभानं शाब्दबोधे मास्तु पाकानुकूलाद्यकृतिगतयत्किञ्चित्त्वमेवान्वयितावच्छेदकतया भासतां तावताप्यतिप्रसङ्गवारणसंभवादित्याशङ्कायां, यत्किञ्चित्त्वस्य तद्व्यक्तित्वपर्यवसितत्वात् तदुपस्थापकपदाभावेन तस्यान्वयितावच्छेदकतया भानं न संभवतीत्यभिहितं तद्व्यक्तिमनन्तर्भाव्येति ग्रन्थेनेति बोध्यम् ।

**दुर्वचत्वादिति ।** यत्किञ्चित्त्वस्य तद्व्यक्तित्वे पर्यवसितत्वादिति भावः ।

अत्र पाके धात्वर्थे तद्व्यक्तित्वोपस्थापकपदाभावेन तत्तत्पाकानुकूलकृतित्वस्य लडर्थान्वयितावच्छेदकत्वाभावात् तदवच्छेदेन वर्तमानप्रागभावस्यान्वयासंभवेऽपि तस्य तत्पाकानुकूलकृतित्वावच्छिन्नत्वविशिष्टप्रतियोगितासंबन्धेन कृतावन्वयः संभवत्येव । तद्व्यक्तित्वस्य संसर्गतयैव भानात् । अन्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसंबन्धे भासते इति नियमस्याप्रामाणिक-

**प्रागभावस्य वर्तमानत्वं शब्दप्रयोगाधिकरणक्षणवृत्तित्वम् । वर्तमानप्रागभावस्य प्रत्ययार्थत्वे तस्य स्वविशिष्टकालवृत्तिकृतिजन्य-पाकाननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन, वर्तमानकालध्वंसस्य तदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयत्व-संबन्धेन कृत्यंशेऽन्वयोपगमे उदीच्यकृतौ वर्तमानप्रागभावादेः**

विवरणम्

तायाः तृतीयाविचारे उक्तत्वात् । तथापि अवच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि विशेषणतया भासमानमेव रूपं विशेषणे अवच्छिन्नत्वसंबन्धेन विशेषणमिति पक्षे, धर्मिणि कृतौ विशेषणतया भासमानस्यैव तत्पाकानुकूल-कृतित्वस्य अवच्छिन्नत्वसंबन्धेन वर्तमानप्रागभावे विशेषणतया भानं वाच्यम् । एवञ्च पदानुपस्थिततद्व्यक्तित्वघटितस्य निरुक्तकृतित्वस्य प्रागभावे प्रकारतया भानं न संभवति । अत एव अमुं पक्षमभिप्रेत्य दीधितिकृद्भिः इह भवने मैत्रेणैव पक्ष्यते तेमनमित्यत्र एतद्भवनाधिकरणक-तेमनपाकत्वेन शब्दात्पाकानुपस्थित्या तदवच्छिन्ने मैत्रान्यसमवेतभविष्यत्कृति-विषयत्वव्यवच्छेदबोधो न संभवतीति अभिहितमित्याशयेन लडर्थस्य कृतौ अन्यादृशसंबन्धभानमङ्गीकृत्य निरुक्तापत्तिं परिहरति — **नोति** ।

लडर्थप्रागभावे वर्तमानत्वं यदि शब्दप्रयोगाधिकरणकालवृत्तित्वं तदा पाककृतेर्वर्तमानतादशायां पक्ष्यतीति प्रयोगापत्तिर्दुर्वारा । शब्दप्रयोगाधि-करणकालपदेन पाकारम्भपूर्वसमयव्यापिस्थूलकालस्य ग्रहणसंभवात् तद्वृत्ति-प्रागभावप्रतियोगित्वस्य वर्तमानपाककृतावबाधितत्वात् । अतः वर्तमानत्व-घटकं कालं क्षणत्वेन निवेशयति — **प्रागभावस्य वर्तमानत्वमिति** । विशिष्टप्रतियोगितासंबन्धेनेति कृत्यंशेऽन्वयोपगमे इत्यनेनान्वेति ।

दर्शितविशिष्टसंबन्धासत्त्वेनातिप्रसङ्गविरहात् । ध्वंसपूर्वत्वञ्च तदनधिकरणत्वमेव ।

न चान्तरालिककृतिजन्यस्य पच्यर्थव्यापारस्य पूर्वव्यापारानुकूलकृत्यजन्यतयाऽन्तरालिककृतेः पूर्वकृतिजन्यपाकाननुकूलत्वमक्षतमेवेति तस्या अपि निरुक्तविशिष्टसंबन्धेन वर्तमानप्रागभावादिमत्त्वमक्षतमेवेति वाच्यम् । कृतिजन्यपाकेत्यत्र कृतिजन्यव्यापाराधीनफलानुकूलव्यापारस्य विवक्षितत्वात् ।

विवरणम्

**संबन्धासत्त्वेनेति** । पाकमध्यकालीनया दर्वीघट्टनाद्यनुकूलकृत्या यस्तण्डुलपाकः निष्पाद्यते तदनुकूलत्वमेव भाविन्याः मण्डस्रावणादिकृतेरिति स्वविशिष्टकालवृत्तिकृतिजन्यपाकानुकूलत्वमेवोत्तरकृताविति भावः ।

ननु प्रागभावानङ्गीकारपक्षाभिप्रायेण वर्तमानध्वंसः लडर्थ इत्युक्तम् । तस्य च संबन्धः स्वप्रागभावाधिकरणत्वरूपस्वपूर्वत्वघटितः न संभवतीत्याशयेनाह — **ध्वंसपूर्वत्वञ्चेति** । ध्वंसस्यानन्ततया उत्तरकालस्य सर्वस्यापि ध्वंसाधिकरणतया पूर्वकालस्यैव तदनधिकरणत्वमिति भावः ।

**पच्यर्थव्यापारस्येति** । अधिश्रयणाद्यधःश्रयणान्तः सर्वोऽपि व्यापारः ताद्रूप्येण पचधात्वर्थ इति पक्षे दर्वीघट्टनादिव्यापारस्यापि पच्यर्थत्वमिति भावः ।

**कृतिजन्यव्यापाराधीनफलानुकूलव्यापारेति** । सर्वोऽपि व्यापारः विक्लित्तिरूपमुख्यफलानुकूल इति स्वविशिष्टकृतिजन्यदर्वीघट्टनादिव्यापाराधीनविक्लित्तिरूपफलानुकूलस्य मण्डस्रावणादेरनुकूलैव तत्कृतिरिति नातिप्रसङ्ग इति भावः ।

**पक्ता इत्यादौ लुटः अनद्यतनभविष्यत्त्वमर्थः । अनद्यतनभविष्यत्त्वञ्च शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा ।**

विवरणम्

अनद्यतनभविष्यत्कालवृत्तित्वस्य कृतौ बोधस्वीकारे प्रयोजनाभावात् कृत्यन्वयिनः अनद्यतनभविष्यत्त्वस्य लुडर्थतामाह—**पक्तेत्यादावित्यादिना ।**

शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सतीत्यत्र दिवसपदार्थः पूर्वमध्यरात्रप्रभृत्युत्तरमध्यरात्रपर्यन्तः काल इति वैयाकरणाः ।

**शब्दप्रयोगकालीनेति ।** अत्रापि कालस्य क्षणत्वेन निवेशः कार्यः । अन्यथा पाकारम्भपूर्वकालपर्यन्तव्यापिस्थूलकालवृत्तिप्रागभावप्रतियोगित्वस्य वर्तमानपाककृतौ सत्त्वेन पचतीत्यत्र पक्तेति प्रयोगापत्तिः । न च वर्तमानपाककृतौ अनद्यतनत्वबाधात् नोक्तदोष इति वाच्यम् पूर्वदिनपाककृतिमादाय पक्तेति प्रयोगापत्तेः संभवात् । कृत्युत्पत्तिपूर्वकालव्यापिस्थूलकालनिष्ठप्रागभावप्रतियोगित्वस्यानद्यतनत्वस्य च तत्र कृतावबाधितत्वादिति बोध्यम् ।

लाघवादाह —**शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वमिति ।** शब्दप्रयोगाधिकरणदिवसचरमक्षणे उत्पन्ना पाककृतिः दिवसध्वंससमयेऽपि वर्तते । तत्र च स्थले पक्ष्यतीत्येव प्रयोगः न पक्तेति । एवञ्चात्र परिष्कारे उत्पत्तेरनिवेशे निरुक्तस्थले पक्तेति प्रयोगापत्तिः । तादृशकृतौ दिवसध्वंसवृत्तित्वस्य सत्त्वादत उत्पत्तिनिवेश इति बोध्यम् ।

**केचित्तु भविष्यत्त्वमेव तस्यार्थः । क्रियायाः कृतेर्वा स्वरूपसदनद्यतनत्वमेव तत्साधुतानियामकम् । असाधुत्वादेव अद्य पक्ष्यतीत्यादौ पक्तेति न प्रयोगः इत्याहुः ।**

**तन्न — तथा सति भविष्यत्त्वादिकमपि नाख्यातार्थः स्यात् । स्वरूपसद्भविष्यत्त्वादिकमेव लडादिप्रत्ययस्य साधुतानियामकम् ।**

विवरणम्

दूषयितुं लट इव लुटोऽपि केवलभविष्यत्त्वार्थकत्वं वदतां मतमनुवदति **केचित्त्विति** । भविष्यत्त्वमेवेति एवेनानद्यतनत्वस्य व्यवच्छेदः ।

ननु सायं पक्ष्यत्यपि चैत्रे पक्तेति प्रयोगापत्तिः पाकानुकूलानागतकृतेश्चैत्रेऽबाधात् इत्यत आह — **क्रियाया इति** । ज्ञाता इत्यादिस्थलाभिप्रायकमिदम् ।

स्वरूपसदनद्यतनत्वमेव — अनद्यतनत्वं स्वरूपसदेवेति योजना । एवेन बोधविषयत्वस्य व्यवच्छेदः । एवेनानद्यतनत्वस्येव भविष्यत्त्वस्यापि लुटः साधुतानियामकत्वात् अनद्यतनत्वमेव साधुतानियामकमित्युक्तिरसंगतेति शङ्का निरस्ता ।

अद्य पक्ष्यतीत्यादौ — अद्य पक्ष्यतीति प्रयोक्तव्ये । एवमग्रेऽपि ।

प्रतिबन्दीमुखेन लुटः अनद्यतनत्वार्थकत्वं व्यवस्थापयति **तन्नेत्यादिना** ।

असाधुत्वादेव पक्ष्यतीत्यादौ [86] पक्ता इतिवत् पचतीत्यादौ पक्ष्यतीति प्रयोगविरहः इत्यस्यापि वक्तुं शक्यत्वात् ।

पचति, पक्ष्यति इत्यादेः अविलक्षणबोधजनकत्वमनुभवविरुद्ध-मिति कालविशेषबोध आवश्यक इति चेत् । तदा पक्ता पक्ष्यतीत्यादेरपि विलक्षणबोधजनकत्वस्यानुभविकतया अनद्यतनत्वा-न्वयबोधोऽपि दुर्वारः ।

यदि च पक्ष्यतीत्यादिवाक्यजन्यबोधे सति भविष्यत्त्वादि-संशयानुदयात् भविष्यत्त्वादेः शाब्दधीविषयत्वमावश्यकमित्युच्यते । तदा [87] अनद्यतनत्वबोधेऽपीदृशीमेव युक्तिं गृहाण ।

विवरणम्

**अविलक्षणबोधजनकत्वमिति** । स्वरूपसतः भविष्यत्त्वस्य लुट्-साधुतायामिव वर्तमानत्वस्यापि स्वरूपसत एव लट्साधुतायां नियामकत्व-संभवेन पचति, पक्ष्यति इति वाक्याभ्यां पाकानुकूलकृतिबोधस्यैवं वक्तव्यत्वादिति भावः ।

**ईदृशीमेव युक्तिमिति** । पक्ता इति वाक्यजन्यबोधानन्तरं पाककृतौ अनद्यतनत्वसंशयानुदयेन तच्छाब्दबोधस्य निरुक्तसंशयप्रति-बन्धकत्वसंपादनाय कृतौ अनद्यतनत्वभानावश्यकतारूपां युक्तिमित्यर्थः ।

86. इत्यादौ, नास्ति (ब. कृ.)

87. अनद्यतनबोधेऽपि (का. आ.)

**एवं न पक्ष्यतीत्यादौ अभावे अनागतकालावच्छिन्नत्वभान-मावश्यकम् । अन्यथा पक्ष्यत्यपि वर्तमानवृत्तिपाककृत्यभावमादाय**

विवरणम्

एतावता पक्ष्यतीत्यादौ अनागतत्वस्यैव पक्तेत्यत्रानद्यतनत्वस्य भान-निर्वाहाय अनद्यतनत्वस्य लुडर्थतां व्युत्पाद्य, नञ्समभिव्याहारस्थले न पक्ष्यतीत्यादौ कृत्यभावे अनागतकालावच्छिन्नत्वभाननिर्वाहाय अनागतत्वस्य लृडर्थतेव न पक्तेत्यादौ कृत्यभावे अनद्यतनकालावच्छिन्नत्वभानायानद्यतन-त्वस्य लुडर्थता स्वीकार्या इत्याह — **एवमित्यादिना** । वर्तमानवृत्ति-पाककृत्यभावमित्यत्र वृत्तित्वमभावान्वयि ।

अत्र "किञ्च भविष्यत्कालिकचैत्रकृतेरसंभवेनासद्भूतत्वात् तत्र कालान्वयासंभवादित्यभिप्रायेणाह — **एवमिति** । अत्र च यद्यपि भविष्यत्कालिकचैत्रकृतेरसंभवेन तदभावस्याप्रसिद्धिरिति न तादृशकृत्य-भावेऽपि भविष्यत्कालान्वयः संभवति । तथापि चैत्रीयवर्तमानकृतेः प्रसिद्धत्वेन तादृशकृत्यभावः भविष्यत्काले प्रसिद्ध्यत्येवेति तत्रैव भविष्यत्कालान्वयो विज्ञेयः" (६०१–६०२-पृ·) इत्यादर्शः ।

प्रथमान्तार्थस्याख्यातार्थकृतिविशेषणतया भानस्याव्युत्पन्नत्वात् अना-गतत्वस्य कृतावन्वयेऽपि पाकानुकूलानागतचैत्रीयकृतिप्रतियोगिकाभावः न बोध्यते । परन्तु पाकानुकूलानागतकृतिप्रतियोगिकाभाववान् चैत्रः इत्येव ततः शाब्दबोधः । प्रतियोगी चान्यत्र पुरुषे प्रसिद्ध्यतीति नाप्रसिद्धि-निबन्धनदोषस्यावसरः इति सुधीभिर्विभावनीयम् ।

न पक्ष्यतीत्यादिप्रयोगप्रसङ्गात् । न च पक्ष्यत्यपि अनागतयत्किञ्चित्कालावच्छेदेन वर्तमानमभावमादाय न पक्ष्यतीति प्रयोगो दुर्वार एवेति वाच्यम् ।

अनागतकालावच्छिन्नत्वं हि तत्र वर्तमानक्षणध्वंसावच्छिन्नत्वम् । तादृशध्वंसनिष्ठावच्छेदकता चानवच्छिन्ना ग्राह्या । अनागतकृतिमति च पुंसि तदभाववृत्तौ वर्तमानक्षणध्वंसरूपः कालः प्रतियोगिवृत्तावप्यवच्छेदक इति विरोधभञ्जनाय तादृशकृत्यनवच्छेदका-[४४]वान्तरकालावच्छिन्न एवावच्छेदक उपेय इति नोक्तातिप्रसङ्ग इति ।

विवरणम्

**न पक्ष्यतीत्यादिप्रयोगप्रसङ्गादिति** । न च वर्तमाने पाककृत्यभावे स्वरूपसतः अनागतत्वस्याभावादेव नैतादृशप्रयोगप्रसङ्ग इति वाच्यम् । इतः परमपक्ष्यति पचमाने पुरुषे पाककृत्यभावस्य बाधितत्वात्तद्बोधजनकस्य न पक्ष्यतीति वाक्यस्य प्रामाण्यं न स्यात् । अनागतत्वस्य भाने तु अनागतकालावच्छिन्नस्य पाककृत्यभावस्य तस्मिन्नबाधात् तत्प्रयोगस्य प्रामाण्यं निर्वहति ।

**अनवच्छिन्ना ग्राह्येति** । एवञ्च लडर्थः वर्तमानक्षणध्वंसः स्वनिष्ठनिरवच्छिन्नावच्छेदकताकत्वसंबन्धेन नञर्थाभावे अन्वेतीति पर्यवसितम् ।

**विरोधभञ्जनायेत्यादि** । प्रतियोग्यभावयोः एकावच्छेदेनैकत्रावृत्तित्वरूपस्य विरोधस्यानुभवसिद्धत्वात् एकावच्छिन्नस्य एकाधिकरणवृत्ति-

४४. अवान्तरकाल एव (का. आ.)

विवरणम्

प्रतियोग्यभावावच्छेदकत्वं न संभवति । अतश्च कृत्यनधिकरणक्षणावच्छिन्नस्य वर्तमानक्षणध्वंसस्य पुरुषवृत्तिकृत्यभावावच्छेदकत्वम् । कृत्यधिकरणक्षणावच्छिन्नस्य तस्य पुरुषवृत्तिकृत्यवच्छेदकत्वम् । एवञ्च वर्तमानक्षणध्वंसनिष्ठायाः पुरुषवृत्तिकृत्यभावावच्छेदकतायाः निरवच्छिन्नत्वविरहात् नोक्तप्रयोगापत्तिरिति समुदायार्थः ।

अत्र "तथा च न पक्ष्यतीत्यत्र नञा सामान्यत एव वर्तमानक्षणध्वंसावच्छिन्नकृत्यभावो बोध्यते । न तु अनागतयत्किञ्चित्कालावच्छिन्नवर्तमानक्षणध्वंसावच्छिन्नकृत्यभावः । येनानागतयत्किञ्चित्कालावच्छिन्नकृत्यभावमादाय पक्ष्यत्यपि न पक्ष्यतीति प्रयोगः स्यादित्यर्थः । प्रदर्शितदोषस्याभावं स्वयमप्युपपादयति अनागतकृतीति । वर्तमानक्षणध्वंसरूपकालस्य अनागतकृतितदभावोभयावच्छेदकत्वप्राप्तिरूपत्वस्य विरोधस्य भञ्जनाय — परिहाराय तादृशकृत्यनवच्छेदकः अवान्तरकाल एव तदभावावच्छेदक इत्युपेयम् । अर्थात् पक्ष्यमाणे पुरुषे या अनागतकृतिः तदवच्छेदकः अन्यः अवान्तरकालः । तादृशकृत्यभावावच्छेदकश्चान्यः अवान्तरकालः इति स्वीकार्यम् । तथा चानागतकृत्यवच्छेदकावान्तरकाले पक्ष्यमाणे पुंसि न पक्ष्यतीति प्रयोगापत्तिरूपातिप्रसङ्गः नास्ति । अनागतकृत्यवच्छेदकावान्तरकालापेक्षया अनागतकृत्यभावावच्छेदकावान्तरकालस्य भिन्नत्वात् । किञ्चानागतकृतितदभावयोः अवच्छेदककालयोरेवं भेदे प्राप्ते उक्तावच्छेदकताविरोधोऽपि नास्तीत्यर्थः" (६०२-पृ·) इत्यादर्शः ।

अत्रानागतयत्किञ्चित्कालावच्छिन्नस्यापि कृत्यभावस्यानागतकालावच्छिन्नत्वमस्त्येव । एवञ्च सामान्यतः वर्तमानक्षणध्वंसावच्छिन्नत्वस्य

विवरणम्

कृत्यभावे बोधनेन कथं पूर्वपक्षोक्तापत्तिर्वारयितुं शक्यते ! वर्तमानक्षण-ध्वंसनिष्ठा अवच्छेदकता निरवच्छिन्ना ग्राह्या इति मूलात् कथं सामान्यतो वर्तमानक्षणध्वंसावच्छिन्नत्वं निविष्टमिति लभ्यते । एवमुत्तरत्र अनागतकृतितदभावयोः अवच्छेदककालस्य भेदं स्वीकृत्यापत्तिपरिहारो वर्णितः । तत्रानागतकृत्यभावावच्छेदकः अन्यः अवान्तरकालः इति वदता कृत्यभावे अनागतत्वं स्वीकृतमेव । तच्च वर्तमानक्षणध्वंसावच्छिन्नत्वमेव अन्यस्य दुर्वचत्वात् । इत्थञ्च न पक्ष्यतीति वाक्यजन्यबोधे यदि सामान्यतो वर्तमानक्षणध्वंसावच्छिन्नत्वं कृत्यभावे विषयः तदा कथमति-प्रसङ्गो वारितो भवति विषयाबाधात् । अपि चानागतकृतितदभावयो-रवच्छेदककालभेदस्वीकारेणैवातिप्रसङ्गवारणे ध्वंसनिष्ठा अवच्छेदकता निर-वच्छिन्ना ग्राह्येति ग्रन्थः किमर्थः? तद्ग्रन्थार्थोपपादनपरतया उत्तर-ग्रन्थव्याख्यानं वा कथं संगच्छते । तस्मात्सर्वमिदमसमञ्जसम् ।

नन्वनागतकृत्यभावस्यापि यदि वर्तमानक्षणध्वंसः अवच्छेदकः तदा तस्यैवानागतकृत्यवच्छेदकत्वाद्विरोधः कथं परिह्रियते इति चेदित्थम् । एकावच्छिन्नस्यैकस्य प्रतियोगितदभाववृत्तावनवच्छेदकत्वं विरुद्धम् । वर्तमान-क्षणध्वंसावान्तरकालावच्छिन्नस्य तस्य अनागतकृतिवृत्तावनवच्छेदकत्वं अन्या-वान्तरकालावच्छिन्नस्य वर्तमानक्षणध्वंसस्य तदभावावच्छेदकत्वमिति निरुक्त-विरोधः परिहृतो भट्टाचार्यैः । अवान्तरकालावच्छिन्न अवच्छेदकः इति मूलपाठः न तु अवान्तरकाल अवच्छेदक इति । इत्थञ्च अनागतयत्किञ्चित्कालावच्छेदेन पाककृतिमत्पुरुषनिष्ठकृत्यभाव-निरूपिता वर्तमानक्षणध्वंसनिष्ठा अवच्छेदकता तदवान्तरकालावच्छिन्ना

**उक्तयुक्त्या अनागतत्वस्य यथा लडाद्यर्थत्वं तथा अद्य पक्ष्यति न पक्ता इत्यत्रानद्यतनकालावच्छिन्नत्वस्याभावेऽभाने श्वः पक्षयत्यपि अद्यतनानागतकालावच्छिन्नपाककृत्यभावमादाय न पक्ता इति प्रयोगप्रसङ्गेन लुटः अनद्यतनार्थत्वमावश्यकम् ।**

विवरणम्

न निरवच्छिन्नेति निरवच्छिन्नवर्तमानक्षणध्वंसनिष्ठावच्छेदकताकत्वाभावात्कृत्यभावस्य न तथा प्रयोगापत्तिः । यत्र च स्थले पाकानुकूलकृतिः अनागतयत्किञ्चित्कालावच्छेदेनापि नास्ति तत्र तत्पुरुषनिष्ठकृत्यभावनिरूपिता वर्तमानक्षणध्वंसनिष्ठा अवच्छेदकता निरवच्छिन्नेति तत्र न पक्ष्यतीति प्रयोग उपपद्यते । इत्थमेवावान्तरेति कालविशेषणस्योपादानं भट्टाचार्याणां संगच्छते । अन्यथा कृत्यनवच्छेदककाल इत्येव ब्रूयात् । एवञ्च सर्वोऽपि ग्रन्थः समञ्जसो भवतीति सुधीभिर्विभावनीयम् ।

प्रासङ्गिकं समाप्य प्रकृतमाह — **उक्तयुक्त्येति** । कृत्यभावे अनागतकालावच्छिन्नत्वभानानुरोधरूपयुक्त्येत्यर्थः ।

अद्यतनानागतकालः -- शब्दप्रयोगाधिकरणदिवसध्वंसानधिकरणवर्तमानक्षणध्वंसाधिकरणकालः ।

**आवश्यकमिति** । न च साधुतानियामकस्य अनद्यतनत्वस्याभावादेव न निरुक्तप्रयोगापत्तिरिति वाच्यम् । किञ्चित्समयानन्तरमद्यैव पक्ष्यति चैत्रे न पक्तेति प्रयोगस्य प्रामाण्यानुपपत्तेः ।

**अनागतानद्यतनकालावच्छिन्नत्वमपि उक्तरीत्यातिप्रसङ्गवारणाय**

विवरणम्

तद्बोध्यस्य अनागतकालावच्छिन्नस्य पाककृत्यभावस्य तस्मिन् बाधात् । अनद्यतनत्वस्य भाने तु अनद्यतनानागतकालावच्छिन्नस्य पाककृत्यभावस्य तस्मिन्नबाधितत्वात्प्रामाण्यमुपपद्यते । यदि विनैवानद्यतनत्वभानं अनद्यतनानागतकालावच्छिन्नकृत्यभावस्याबाधात् शाब्दबोधस्य प्रमात्वमित्युच्यते । तदा प्रमापदस्य पारिभाषिकत्वापत्तिः । अबाधितार्थविषयताशालिज्ञानस्यैव प्रमापदमुख्यार्थत्वात् । स्पष्टा चेयं रीतिः समानाधिकरणप्रतीतौ भेदाभेदभानविचारे ब्रह्मानन्दीये । अपि च स्वरूपसतः अनद्यतनत्वस्य लुटः साधुतानियामकत्वे 'मनुः सावर्णिको नाम भवान् भुवि भविष्यति' इत्यत्र लुट् स्यात् । अनद्यतनत्वस्य वास्तविकस्य सत्त्वात् । एवं 'इयं नु कदा गन्ता यैवं पादौ निदधाति' इत्यत्र गमने अद्यतने अनद्यतनत्वस्याभावाल्लुट् न स्यात् । अतः अनद्यतनानागतत्वविवक्षैव लुटः साधुतानियामिका वाच्या । प्रथमे विद्यमानस्याप्यनद्यतनत्वस्याविवक्षया भविष्यत्त्वमात्रविवक्षया लृट् । द्वितीये च अद्यतनेऽप्यनद्यतनत्वविवक्षया लुट् । तथा विवक्षायाः फलन्तु अतिविलम्बितगमनप्रत्यायनम् । एवञ्च अनद्यतनत्वविवक्षायाः लुटः साधुतानियामकत्वे अनद्यतनत्वस्य बोध आवश्यक इति तस्य लुडर्थता सिद्ध्यतीति बोध्यम् ।

**उक्तरीत्येति** । श्वः पक्ष्यत्यपि अनद्यतनानागतयत्किञ्चित्कालावच्छेदेन विद्यमानं पाककृत्यभावमादायेत्यर्थः ।

अतिप्रसङ्गवारणाय—न पक्ता इति प्रयोगप्रसङ्गरूपातिप्रसङ्गवारणाय।

**प्रकृतशब्दप्रयोगाधिकरणदिनध्वंसनिष्ठानवच्छिन्नावच्छेदकताकत्वरूपं ग्राह्यम् ।**

**अवच्छेद्यावच्छेदकभावश्च संबन्धविधया भासते । ध्वंस एव पदार्थः इत्यवधेयम् ।**

**अथ नञ्समभिव्याहारस्थलेऽपि कृतावेव कालान्वयोऽस्तु ।**

विवरणम्

**ग्राह्यमिति** । इत्थञ्च शब्दप्रयोगाधिकरणदिवसध्वंसनिष्ठायाः पुरुषवृत्तिकृत्यभावावच्छेदकतायाः कृत्यनधिकरणक्षणावच्छिन्नत्वेन निरवच्छिन्नत्वाभावान्नातिप्रसङ्ग इति भावः ।

अनद्यतनानागतकालावच्छिन्नत्वे न लुटः शक्तिः अनन्यलभ्यः शब्दार्थः इति न्यायात् अवच्छिन्नत्वस्य संसर्गतया भानसंभवादित्याशयेन ध्वंसमात्रस्य लुडर्थतामाह — **अवच्छेद्यावच्छेदकभावश्चेत्यादिना** ।

ध्वंस एव — शब्दप्रयोगाधिकरणत्वोपलक्षितदिवसध्वंस एव ।

पदार्थः — लुडर्थः ।

कृत्यादिव्यापारबोधकाख्यातार्थः कालः तत्रैव व्यापारे अन्वेतीत्येकव्युत्पत्तिकल्पनायां लाघवमभिसन्धाय शङ्कते — **अथेति** ।

**अनागतकृतिश्च महाप्रलयस्याप्रामाणिकतया सर्वत्रैव प्रसिद्ध्यतीति न प्रतियोग्यप्रसिद्धिः । अभावान्वयश्चात्मनि कालानवच्छिन्नाश्रयता-संबन्धेनोपगम्यतामिति चेत् ।**

विवरणम्

नन्वेवं सति महाप्रलयपूर्वकाले चैत्रः न पक्ष्यतीति प्रयोगो न स्यात् । शब्दप्रयोगाधिकरणकालोत्तरं केनापि कदापि पाकस्याकरणात् अनागतायाः पाकानुकूलकृतेरप्रसिद्ध्या तदभावस्य सुतरामप्रसिद्धत्वेन बोधनासंभवादित्यतः महाप्रलयानङ्गीकारपक्षमाश्रयते — **अनागतकृतिश्चे-त्यादिना** ।

**अप्रामाणिकतयेति** । घटादिसन्ततिः अत्यन्तमुच्छिद्यते संततित्वात् प्रदीपसंततिवदित्यनुमानन्तु अप्रयोजकमिति भावः ।

नन्वेवमपि पक्ष्यत्यपि न पक्ष्यतीति प्रयोगापत्तिः अनागतायाः पाकानुकूलकृतेरभावस्य वर्तमानकालावच्छेदेन तत्र पुरुषे सत्त्वादित्यत आह — **अभावान्वयश्चेति** । निरुक्तपुरुषनिष्ठायाः अनागतकृतिप्रति-योगिकाभावाश्रयतायाः वर्तमानकालावच्छिन्नत्वान्न तथा प्रयोगापत्तिरिति भावः ।

अत्र "यदि महाप्रलयः स्यात् तदा तदधिकरणककृतेरप्रसिद्ध्या प्रतियोग्यप्रसिद्धिः स्यादपि । न चैवमस्ति । महाप्रलयान्यकाले तु कस्या अपि कृतेः सत्त्वादत्यन्ताभावो न संभवतीत्यर्थः" (६०४-पृ.) इत्यादर्शः । महाप्रलयान्यकाले कस्या अपि कृतेः सत्त्वादत्यन्ताभावो न

**न — यदुत्तरकाले चैत्रीयौदनपाकादिकमप्रसिद्धं तदानीं चैत्रः**

विवरणम्

संभवतीति नोपपद्यते । कृतेरत्यन्ताभावस्य पुरुषविशेषे संभवात् । परन्तु अत्र अप्रसिद्धिरेव अत्यन्ताभावपदेन विवक्षिता । एवञ्च न पक्ष्यतीत्यतः पाकानुकूलानागतकृतिप्रतियोगिकाभाववानिति बोधः । यदि महाप्रलयः प्रामाणिकः तदा अनागतकालसामान्यान्तर्गतमहाप्रलयवृत्तिपाकानुकूलकृतिरूपप्रतियोगी न प्रसिद्धः स्यात् । स च नाङ्गीक्रियते अप्रामाणिकत्वात् । तद्व्यतिरिक्ते सर्वस्मिन्नप्यनागतकाले पाकानुकूलकृतिः प्रसिद्ध्यति । तदभावश्च प्रथमान्तार्थे बोध्यते इत्यादर्शभावः ।

परन्तु अनागतत्वं कृतौ भासते इति पक्षे नानागतकालसामान्यवृत्तित्वं बोध्यते । किं तु वर्तमानक्षणध्वंसावच्छिन्नत्वम् । इत्थञ्च इदानीं न पक्ष्यतीत्यत्र न प्रतियोग्यप्रसिद्धिः संभवति । महाप्रलये पाककृतेरसत्त्वेऽपि वर्तमानक्षणध्वंसावच्छेदेन पाकानुकूलकृतेः प्रसिद्धत्वात् । परन्तु महाप्रलयपूर्वकाले न पक्ष्यतीति प्रयोगानुपपत्तिः । तादृशशब्दप्रयोगाधिकरणक्षणोत्तरकालः महाप्रलय एवेति तद्वृत्तिपाककृतिरूपप्रतियोगिनः अप्रसिद्धत्वेन तदभावस्य बोधयितुमशक्यत्वात् । अतः महाप्रलयो नाङ्गीकृतः । अत एव सर्वत्रैव प्रसिद्ध्यतीत्यभिहितं भट्टाचार्यैः । इतरथा महाप्रलयपूर्वकाले न पक्ष्यतीति प्रयोगे क्वचित् प्रतियोग्यप्रसिद्धिः स्यात् । महाप्रलयानङ्गीकारे तु निरुक्तस्थलविशेषस्यैवाभावात् सर्वत्रैव प्रतियोगिप्रसिद्धिरिति तदाशयः इति बोध्यम् ।

महाप्रलयानङ्गीकारेऽपि यदोदनादिकर्मकपाकानुकूला अनागतकृतिर्न प्रसिद्ध्यति तादृशकर्मबोधकपदघटितनञ्समभिव्याहृतवाक्यप्रयोगानुपपत्त्या कृतौ कालान्वयं निराचष्टे — **नेत्यादिना** ।

**ओदनं न पक्ष्यतीति प्रयोगानुपपत्तेः अनागतचैत्रीयौदनकर्मक-पाकानुकूलकृत्यप्रसिद्ध्या तदभावप्रत्यायनासंभवात् ।**

विवरणम्

**चैत्रीयौदनपाकादिकमप्रसिद्धमिति** । चैत्रीयत्वमोदनान्वयि न पाकान्वयि । प्रकृतानुपयोगात् । चैत्रः ओदनं न पक्ष्यतीत्यत्र ओदनशब्दः चैत्रीयतण्डुलतात्पर्यको बोध्यः । चैत्रीयौदनं न पक्ष्यतीति प्रयोगानुपपत्तिः इति तु युक्तः पाठः ।

**अनागतचैत्रीयेति** । अत्रापि चैत्रीयत्वमोदनान्वयि न कृत्यन्वयि । चैत्रो न पक्ष्यतीत्यादितः पाकानुकूलकृतेरभावः चैत्रे बोध्यते न तु चैत्रीयपाककृतेरभावः । कृतौ चैत्रीयत्वोपस्थापकपदाभावात् । इत्थञ्च चैत्रीयत्वविशेषितानागतपाककृतिप्रतियोगिकाभावाभानात् तादृशकृत्यप्रसिद्ध्यभिधानस्य प्रकृतानुपयोगात् ।

अत्र "यदुत्तरकाले — यादृशोत्तरकाले चैत्रकर्तृकपाकः अप्रसिद्धः — असंभवी तदानीं — तादृशोत्तरकाले चैत्रः ओदनं न पक्ष्यतीति प्रयोगानुपपत्तिः स्यात् । त्वया तत्र तादृशोत्तरकालवृत्तिकृतेरभावः प्रत्यायनीयः । स च न संभवति प्रतियोगिभूतायाः तादृशोत्तरकालवृत्तिकृतेरप्रसिद्धत्वादित्यर्थः" (६०४ पृ.) इत्यादर्शः । अनेन चैत्रीयौदनपाकादिकमप्रसिद्धमिति मूले चैत्रीयत्वमोदनपाकेऽन्वेतीति प्रतीयते । यत्र ओदनकर्मकः चैत्रकर्तृकानागतपाकः अप्रसिद्धः तत्रानुपपत्तिर्नास्त्येव । प्रथमान्तपदार्थस्याख्यातार्थेऽन्वयस्याव्युत्पन्नत्वात् चैत्रो न पक्ष्यतीत्यतः चैत्रीयत्वाविशेषिता या अनागता

न चाभावे कालान्वयोपगमेऽपि यत्तण्डुलव्यक्त्यादिकर्मकपाक एवाप्रसिद्धः तद्व्यक्त्यादिपरस्य एतत्तण्डुलं न पक्ष्यतीत्यादिवाक्यस्याप्रमाणत्वापत्तिः प्रतियोग्यप्रसिद्धेर्दुर्वारत्वादिति, तत्र पाके तद्व्यक्तिकर्मकत्वाभाव एव नञा बोध्यते इत्युपगन्तव्यम् । तथाचोक्तस्थलेऽपि तत्तत्पाके चैत्रीयौदनकर्मकत्वाभावबोधोपगमेनोपपत्तिरिति वाच्यम् ।

पाके तत्कर्मकत्वाभावबोधोपगमे तादृशपाकानुकूलानागतकृतेः कर्तरि भानस्योपगन्तव्यतया तदुत्तरं कदाचिदपि येन न पक्ष्यते

विवरणम्

ओदनकर्मकपाकानुकूला कृतिः तदभाव एव बुध्यते । सा च कृतिरन्यत्र पुरुषे प्रसिद्ध्यत्येव । तस्मादेवं व्याख्यानं न समञ्जसम् । किन्तु चैत्रीयत्वमोदनान्वयि । अनुपपद्यमानत्वेन निर्दिष्टे प्रयोगे ओदनशब्दः चैत्रीयौदनपरः । इत्थञ्च शब्दप्रयोगकाले तत्पूर्वकाले वा चैत्रीयौदनकर्मकः पाकः प्रसिद्धः तदुत्तरकाले तु न, तत्र चैत्रीयौदनकर्मकपाकानकूलायाः अतीतकृतेः प्रसिद्धत्वेऽपि तादृशानागतकृतेरप्रसिद्ध्या तदभावबोधनासंभव इति मूलाशयः । अनुपदं 'तथा चोक्तस्थलेऽपि तत्तत्पाके चैत्रीयौदनकर्मकत्वाभावबोधोपगमेनोपपत्तिः' इति शङ्काग्रन्थोऽपि अत्र चैत्रीयत्वमोदनान्वयीति बुद्धिं द्रढयति ।

उक्तस्थलेऽपि — यदोदनकर्मकः पाकः वर्तमानः अतीतो वा प्रसिद्धः न त्वनागतः तादृशौदनादिपदघटितवाक्येऽपि ।

**कर्तरि भानस्येति** । एकस्यैव नञः सत्त्वेन तेन द्वितीयार्थाभावस्य बोधितत्वात् कृत्यभावबोधनं नञा न संभवतीति भावः ।

तादृशकर्तृसमभिव्याहृतदर्शितवाक्यस्य प्रामाण्योपपादनासंभवात् । अगत्या तु यत्कर्मको यत्कर्तृकः पाकोऽप्रसिद्धः तादृशकर्मकर्तृघटितार्थकनञ्पदवद्वाक्यस्यायोग्यतोपगम्यते ।

केचित्तु तत्रापि पाके तत्कर्मकत्वाभावस्य तादृशे च कर्तरि पाककृत्यभावस्य बोधमुपगम्य प्रामाण्यमुपपादयन्ति । तात्पर्यसत्त्वे

विवरणम्

ननु अभावे कालान्वयोपगमेऽपि आकाशं न पक्ष्यति घटः इति प्रयोगानुपपत्तिः । आकाशकर्मकपाकस्याप्रसिद्ध्या तादृशपाककर्तृत्वाभावबोधनस्य, पाककर्तृत्वस्य घटे अप्रसिद्ध्या तत्र आकाशकर्मकत्वाभाववत्पाककर्तृत्वबोधनस्य चासंभवात्, एकेन नञा अभावद्वयबोधनासंभवाच्चेत्याशङ्क्य, अगत्या तादृशवाक्यानामप्रामाण्यमाह — **अगत्या त्विति** । एतेन निरुक्तस्थले चैत्रः ओदनं न पक्ष्यतीत्यादिवाक्यानामप्यप्रामाण्योपगमः अनुचितः । कथञ्चिदपि प्रामाण्योपपादनासंभवे एव अप्रामाण्यस्वीकारादिति सूचितम् ।

यत्कर्तृका यत्कर्मिका च क्रिया अप्रसिद्धा तादृशकर्तृकर्मबोधकपदघटितनञ्समभिव्याहृतवाक्ये व्युत्पत्तिवैचित्र्येण नञर्थस्य द्वेधा भानमङ्गीकृत्य, द्वितीयार्थाभावान्वितधात्वर्थान्वितारूयातार्थाभावस्य प्रथमान्तार्थे अन्वयमुपपादयतां मतं द्वितीयाविभक्त्यर्थनिरूपणे दूषितमपि कतिपयदूषणनिराकरणेन परिष्कृत्योपन्यस्यति — **केचित्त्विति** ।

**एकेनापि नञा अभावद्वयबोधनसंभवात् । न चैवं तण्डुलमात्रं पचति पक्ष्यति वा चैत्रेऽपि तण्डुलमयं न पचति, न पक्ष्यति इति प्रयोगः स्यात् । तत्तण्डुलाकर्मकपाकानुकूलवर्तमानादिकृत्यभावाबाधादिति वाच्यम् ।**

विवरणम्

चैत्रः तण्डुलं न पचतीति वाक्यजन्यबोधादविलक्षणबोधजनकत्वं घटः आकाशं न पचतीति वाक्यस्यानुभाविकम् । अतश्च चैत्रः तण्डुलं न पचतीति वाक्यादपि अभावद्वयावगाही शाब्दबोधः स्वीकरणीयः इति तण्डुलमात्रपाचके तण्डुलाकर्मकपाककर्तृत्वाभावस्याबाधात् चैत्रः तण्डुलं न पचतीति प्रयोगापत्तिरिति शङ्कते — **न चेति** ।

अत्र "वर्तमानकालानन्तरं येन पुंसा न कदाचिदपि पक्ष्यते तादृशकर्तृसमभिव्याहृतस्य पाकव्यापाररहितकर्तृसमभिव्याहृतस्य चैत्रः ओदनं न पक्ष्यतीति वाक्यस्य प्रामाण्यं न स्यात् — तत्र चैत्रीयपाकव्यापारस्याप्रसिद्धत्वेन तत्र चैत्रीयौदनकर्मकत्वाभावान्वयस्यासंभवादित्यर्थः" (६०५-पृ.) इत्यादर्शः । नह्यत्र चैत्रकर्तृकानागतपाकत्वावच्छिन्ने द्वितीयान्तार्थचैत्रीयौदन कर्मकत्वाभावः बोधयितुं शक्यते । निरुक्तरूपेण शब्दात्पाकानुपस्थितेः । अपि तु चैत्रीयौदनकर्मकत्वाभाववत्पाकानुकूलानागतकृतिमांश्चैत्रः इति बोधो वक्तव्यः । एकस्यैव नञः सत्त्वात् तेन द्वितीयान्तार्थाभावस्य धात्वर्थे बोधितत्वात् कृत्यभावबोधनासंभवात् । इत्थञ्च निरुक्तपाकानुकूलानागतकृतेः प्रथमान्तार्थे बाधाद्वाक्यस्य प्रामाण्यं न स्यादित्येव ग्रन्थाशयो वर्णनीयः । अत एव 'पाकानुकूलानागतकृतेः कर्तरि भानस्योपगन्तव्यतया' इति ग्रन्थः संगच्छते इति बोध्यम् ।

यतः सुबर्थप्रतियोगिकस्वार्थाभावान्वितक्रियाकर्तृत्वाभावबोधकत्वं नञः आकाशं न पचति घटः इत्यादावपि न स्वीक्रियते। तादृशबोधजनकताया अव्युत्पन्नत्वात्। येनोक्तातिप्रसङ्गः स्यात्। किन्तु पाकः आकाशाकर्मकः पाककृत्यभाववान् घटः इत्यादिसमूहालम्बनबोध एव। उक्तस्थले च चैत्रे पाककर्तृत्वाभावबाधान्न[89] प्रामाण्यप्रसङ्गः।

अस्तु वा तत्राभावान्वितक्रियाकर्तृत्वाभावविषयकोऽसमूहालम्बनरूप एव बोधः। तथापि न दर्शितातिप्रसङ्गः। तादृशबोधे अन्वयितावच्छेदकावच्छेदेन प्रथमाभावभाननियमात् पाकत्वावच्छेदेन च तण्डुलादिकर्मकत्वाभावान्वये योग्यताविरहात्। अन्धः आकाशं न पश्यतीत्यादावपि ईदृशी गतिः।

विवरणम्

**स्वार्थाभावेति**। स्वपदं नञ्परम्। स्वार्थः अभावः।

**समूहालम्बनेति**। न च वाक्यार्थभेदाद्वाक्यभेदापत्तिरिति वाच्यम्। सर्वथा अप्रामाण्यकल्पनामपेक्ष्य वाक्यभेदस्वीकारे दोषाभावः इत्याशयात्। विनैव वाक्यभेदं बोधप्रकारमाह — **अस्तु वेति**।

**प्रथमाभावेति**। द्वितीयार्थान्वितनञर्थाभावेत्यर्थः।

**ईदृशी गतिरिति**। आकाशानिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभाववानिति अभावद्वयावगाही बोध इत्यर्थः।

89. कर्तृत्वाभावबोधात् (ब. कृ.)

अथ यत्तण्डुलादिकर्मकः यत्पुरुषकर्तृकः पाकोऽप्रसिद्धः तत्पुरुषे अन्यकर्मकपाककर्तृत्वस्य, तत्तण्डुलादौ[90] चान्यपुरुषपच्यमानत्वादेर्भ्रमदशायां तत्तण्डुलमयं न पक्ष्यतीत्यादिवाक्यस्य बोधकताया अनुभवसिद्धत्वेनापाकर्तुमशक्यत्वान्नोक्तप्रकारः साधीयान् । विरोधिनिश्चयसत्त्वेन तत्पुरुषे पाककर्तृत्वसामान्याभावस्य, पाकत्वावच्छेदेन तत्तण्डुल[91] कर्मकत्वाभावस्य च प्रतीत्यसंभवादिति चेत् ।

न — तत्र तादृशवाक्यस्यैकाभावावगाहिभ्रमजनकत्वोपगमात् । न च सर्वत्रैव तदुपगमौचित्येन प्रयासवैफल्यमिति वाच्यम् ।

विवरणम्

**विरोधिनिश्चयेति** । तत्पुरुषे अन्यकर्मकपाककर्तृत्वभ्रमः तत्र पाककर्तृत्वसामान्याभावशाब्दबोधे विरोधी । तत्तण्डुले अन्यकर्तृकपाककर्मताभ्रमश्च पाकत्वावच्छेदेन तत्कर्मकत्वाभावबुद्धौ विरोधी ।

तत्र — निरुक्तभ्रमकाले ।

**एकाभावेति** । द्वितीयार्थाभावेत्यर्थः ।

सर्वत्रैव — निरुक्तभ्रमशून्यतादशायामपि ।

**तदुपगमेति** — तत्तण्डुलमयं न पचतीति वाक्यस्य भ्रमजनकत्वोपगमेत्यर्थः ।

90. तण्डुलादौ च (ब. कृ.)

91. तण्डुलकर्मकत्वाभावस्य (ब. कृ.)

विशेषदर्शिभिरप्रतारकैरपि तथाविधवाक्यप्रयोगात् तस्य प्रसिद्धार्थकता-संपादनस्यावश्यकत्वात् । न च तत्तण्डुलादिकर्मकत्वं तन्निष्ठविक्लित्ति-जनकत्वं, तदपि [92] चाप्रसिद्धमिति कथं पाके तदभावप्रत्यय इति वाच्यम् । विक्लित्त्यादावेव तत्तद्वृत्तित्वाभावबोधोपगमात् ।

अपाक्षीत् इत्यादौ लुङः अतीतकालोऽर्थः । तस्याप्याख्यात-सामान्यार्थकृत्यादावन्वयः । तस्य च संबन्ध आधेयत्वम् ।

विवरणम्

**वृत्तित्वाभावबोधेति** । धात्वर्थतावच्छेदके विक्लित्तिरूपफले द्वितीयार्थाधेयत्वस्याभावो बोध्यते इति भावः ।

केचिदित्यनेनात्र मते अस्वरसः सूचितः । तद्बीजन्तु तण्डुलमपचति तेमनं पचति पुरुषे तण्डुलं न पचतीति प्रयोगानुपपत्तिः । तण्डुलकर्मकत्वाभावव-त्तेमनपाककर्तृत्वाभावस्य बाधितत्वात् । एवं सर्वत्र नञ्समभिव्याहारस्थले अभावद्वयावगाहिबोधाननुभवः । आकाशं न पचति घटः इत्यादि-वाक्यानां कदाचिदप्रामाण्यस्य निरुक्तरीत्या आवश्यकत्वात् सर्वदैव तदुपगमौचित्यान्नञर्थस्य वारद्वयं भानस्वीकारस्याश्लिष्टता च ।

**आख्यातसामान्यार्थेति** । आख्यातत्वेन तदर्थेत्यर्थः ।

92. तदपि वा अप्रसिद्धम् (ब. कृ.)

**अथवा कालाविशेषण[93] तयैवातीतत्वं लुङोऽर्थः। आश्रयतासंबन्धेन च तस्य कृत्यादावन्वयः । कालान्तर्भावस्य व्यर्थत्वात् । अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम् ।**

**वस्तुतः वर्तमानध्वंस एव लुङाद्यर्थः तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः । मध्यदशायां अपाक्षीदित्यादिप्रयोगवारणमुक्तरीत्या बोध्यम् ।**

विवरणम्

**कालाविशेषणतयेति** । अतीतकालः लुङर्थः इति पूर्वकल्पे कालविशेषणतया अतीतत्वं लुङा बोध्यते । अत्र कल्पे स्वातन्त्र्येणातीतत्वं बोध्यते ।

अथ वेति कल्पारम्भबीजमाह — **कालान्तर्भावस्येति** ।

लाघवादाह — **वस्तुत इति** ।

ननु पाकमध्यदशाया अपाक्षीत् इति प्रयोगापत्तिः पाकानुकूलाद्यकृतौ वर्तमानध्वंसप्रतियोगित्वसत्त्वादित्यत आह — **मध्यदशायामिति** ।

मध्यदशायां — पाकमध्यदशायाम् ।

उक्तरीत्या — वर्तमानध्वंसस्य स्ववृत्तिकृतिजन्यपाकजन्यविक्लत्त्यनुकूलव्यापाराननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन कृतावन्वयस्वीकारेणेत्यर्थः । पाकमध्यदशाया वर्तते यः पाककृतेर्ध्वंसः तस्य पाकानुकूलाद्यकृतौ प्रतियोगितासंबन्धसत्त्वेऽपि स्ववृत्तीत्यादिसंबन्धो बाधितः । स्ववृत्तिकृतिप्रयोज्यविक्लत्त्यनुकूलप्राथमिकतण्डुलशोधनादिव्यापारानुकूलत्वात्तत्कृतेरिति नोक्तातिप्रसङ्ग इति भावः ।

93. कालिकविशेषणतया (कृ.)

**लङ्प्रत्ययस्य अतीतत्ववदनद्यतनत्वमप्यर्थः अद्य पचति अपचत इत्यप्रयोगात् ।**

विवरणम्

"वस्तुतस्तु अन्त्यकृतिध्वंसस्य लुङर्थत्वं स्वीकार्यं, तथा च वर्तमानपाकानुकूलान्त्यकृतेः पाकवर्तमानतादशायां ध्वंसो न जात इति न तदानीं अपाक्षीदिति प्रयोगापत्तिरिति श्रीगुरवः" (६०९-पृ.) इत्यादर्शः । अत्र वर्तमानः अन्त्यकृतिध्वंसः लुङर्थ इति बोध्यम् । अन्यथा पाकानुकूलान्त्यकृतेर्वर्तमानतादशाया अपाक्षीदिति प्रयोगापत्तिः । लुङर्थान्त्यकृतिध्वंसप्रतियोग्यन्त्यकृतिमत्त्वस्य तत्राबाधितत्वात् । वर्तमानतादृशध्वंसस्य तदर्थत्वे तस्मिन्काले अन्त्यकृतिध्वंसस्यावर्तमानत्वान्न तथा प्रयोगापत्तिः । परन्तु अन्त्यकृतिध्वंसस्य तदर्थत्वे अज्ञासीदित्यत्र लुङर्थान्वयिनि ज्ञाने अन्त्यकृतिध्वंसप्रतियोगित्वबाधादप्रामाण्यापत्तिः । अतः यत्राख्यातत्वेन रूपेण तस्मात्कृतिबोधः तादृशलुङ एवान्त्यकृतिध्वंसवाचकत्वम् । अन्यत्र तु वर्तमानध्वंसमात्रवाचकत्वमिति कल्पनीयम् । एवं लुङ्शक्यतावच्छेदककोटौ गुरुभूतस्यान्त्यत्वस्य निवेशादपि गौरवम् । भट्टाचार्यमते तु लुङ सर्वत्र वर्तमानध्वंसवाचकत्वमेवेति न शक्तिभेदः । आख्यातार्थकृतौ संसर्गविशेषभानस्वीकारेणैवातिप्रसङ्गवारणात् अन्त्यत्वस्य शक्यतावच्छेदककोटावनिवेशाच्च लाघवमनुसन्धेयम् ।

केवलातीतत्वबोधकलुङ्प्रत्ययार्थनिरूपणानन्तरं अनद्यतनत्वविशिष्टातीतत्वबोधकलङ्प्रत्ययार्थं निरूपयति — **लङ्प्रत्ययस्येति** ।

**अद्य पचतीत्यादि** । एतद्दिने प्रातः पाककर्तारमधिकृत्य मध्याह्ने अपचदित्यप्रयोगादित्यर्थः । केवलातीतत्वस्य तदर्थतोपगमे तथा प्रयोगः स्यादिति भावः ।

**अभून्नृपः इत्यादावनद्यतनत्वसत्त्वेऽपि तदविवक्षया न लङ्प्रत्ययेन लुङ्बाधः । अतोऽप्यनद्यतनत्वबोधकत्वं लङ्प्रत्ययस्यावश्यकम् । स्वरूपसदनद्यतनत्वस्य लङ्साधुतानियामकत्वे अनद्यतनत्वस्य वस्तुसतः अविवक्षामात्रेणोक्तस्थले लङ्वारणानुपपत्तेः । इदमप्यनद्यतनत्वं प्रकृतशब्दप्रयोगाधिकरणदिनावृत्तित्वम् ।**

विवरणम्

नन्वेवमभून्नृपः इति प्रयोगानुपपत्तिः धात्वर्थे भवने लङ्प्रयोजकस्य अनद्यतनत्वसहितस्यातीतत्वस्य सत्त्वेन लङा लुङो बाधादित्याशङ्कां, अनद्यतनत्वविवक्षायाः लङ्साधुतानियामकतामङ्गीकृत्य परिहरति — **अभून्नृप इत्यादाविति** ।

अतोऽपि — अनद्यतनत्वविवक्षायाः लङ्प्रत्ययसाधुतानियामकत्वोपगमादपि ।

अत्र "यदि लङः अनद्यतनार्थकत्वं न स्यात् । किन्तु स्वरूपसदेवानद्यतनत्वं लङ्साधुतानियामकं स्यात् । तदा स्वरूपसतः — वर्तमानस्य अविवक्षाया असंभवात् तादृशाविवक्षामात्रेण अभून्नृपः इत्यत्र लङ्वारणं नोपपद्येत । यदा चानद्यतनत्वं लङर्थे एव । तदा तु तस्याविवक्षा संभवतीति अनद्यतनत्वस्याविवक्षया अभून्नृपः इत्यत्र लङ्वारणं लुङः उपादानञ्च संभवतीत्यर्थः" (६०९-पृ.) इत्यादर्शः । अत्र स्वरूपसतः अविवक्षा न संभवतीत्यतन्न संगच्छते । यतः विद्यमानस्याप्यविवक्षा दृश्यते 'इयं नु कदा गन्ता या एवं पादौ निदधाति' इत्यत्र विद्यमानस्यापि अद्यतनत्वस्याविवक्षितत्वात् । अत एव तत्र लुडुपपद्यते । अत

**अथवा स्वातन्त्र्येण अनद्यतनत्वं न लङर्थः । किं तु तादृश-दिनाद्यक्षणवृत्तिध्वंसप्रतियोगित्वरूपमनद्यतनातीतत्वं विशिष्टमेव ।**

**अतीतत्वमनद्यतनत्वं परोक्षत्वञ्च लिटोऽर्थः । 'अध्यास्त सर्वर्तुसुखामयोध्याम्' इत्यादौ परोक्षत्वसत्त्वेऽपि परोक्षत्वाविवक्षया न लिट् । परोक्षत्वञ्च वक्तुः साक्षात्काराविषयत्वम् ।**

**केचित्तु वक्तृ[94] भिन्नकर्तृकत्वमेव परोक्षत्वम् । अत एव लिट[95]**

विवरणम्

एवानुपदं भट्टाचार्याः 'अध्यास्तेत्यत्र परोक्षत्वसत्त्वेऽपि परोक्षत्वाविवक्षया न लिट्' इति निरूपयन्ति । तस्मादयमर्थः । स्वरूपसतः अनद्यतनत्वस्य लङ्साधुतानियामकत्वे, तस्याविवक्षायामपि साधुतानियामकस्य सत्त्वेन लङ्वारणं न संभवति । यदा अनद्यतनत्वं लङर्थः तदा तद्विवक्षैव लङ्साधुतानियामिका भवति । एवञ्चानद्यतनत्वस्य सत्त्वेऽपि तद्विवक्षायाः लङ्साधुतानियामिकायाः अभावान्न लङः प्रसक्तिरिति विभावनीयम् ।

लाघवादाह — **अथ वेति** ।

परोक्षत्वविवक्षायाः लिट्प्रत्ययसाधुतानियामकत्वमाह—**अध्यास्तेति**।

उपायग्रन्थानुसारेण लिडर्थे परोक्षत्वं निर्ब्रुवतां मतमाह — **केचित्त्विति** ।

अत एव — लिडर्थपरोक्षत्वस्य वक्तृभिन्नकर्तृकत्वरूपत्वादेव । किरणावलीग्रन्थोपक्रमे 'व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम्'

94. स्वभिन्नकर्तृकत्वं (ब.) स्वभिन्नकर्तृकर्तृकत्वं (कृ.)

95. लिडुत्तमपुरुष (ब. कृ.)

**उत्तमपुरुषासंभवेनापरोक्षतायामपि लिटः साधुत्वे 'णलुत्तमो वा' इत्यादेर्ज्ञापकत्वमुपायकारोक्तं संगच्छते । अन्यथा निद्रादिदशायां स्वकर्तृकगमनादिक्रियायाः स्वपरोक्षत्वसंभवेन ज्ञापकत्वासङ्गते-रित्याहुः ।**

विवरणम्

इत्याचार्याणां श्लोकः । तत्र विस्तारक्रियायाः वक्तारमाचार्यं प्रति परोक्षत्वाभावात् व्यातेने इति लिट् न साधुरित्याशङ्क्य, णलुत्तमो वा इति सूत्रेण अपरोक्षतायामपि लिट् भवतीति ज्ञापितम् । अतः क्रियाया अपरोक्षत्वेऽपि लिट् साधुरिति समाहितं वर्धमानोपाध्यायैः । ज्ञापकता चेत्थम् । वक्तृभिन्नकर्तृकत्वरूपपरोक्षत्वस्य क्रियायां सत्त्वे एव लिटः संभवात् वक्तृकर्तृकत्वे एव क्रियायाः उत्तमपुरुषसंभवात् लिट उत्तमपुरुष एवासंभवीति णलुत्तमो वेति शास्त्रं निर्विषयं स्यात् । अतश्च तच्छास्त्रं क्वचिदपरोक्षतायामपि लिट् भवतीत्यमुमंशं ज्ञापयति इति । यदि परोक्षत्वं वक्तुः साक्षात्काराविषयत्वरूपं स्यात् । तदा वक्तृकर्तृकक्रियाया अपि निद्रादिकालीनायाः निरुक्तपरोक्षत्वसंभवेन निद्रायामहं जगामेत्युत्तम-पुरुषसंभवेन णलुत्तमो वेति शास्त्रस्य विषयोपपत्तेः ज्ञापककथनमसङ्गतं स्यादिति समुदितार्थः ।

अन्यथा — परोक्षत्वस्य वक्तुः साक्षात्काराविषयत्वरूपत्वे ।

**कलिङ्गे दृष्टोऽसि, नाहं कलिङ्गान् जगाम इत्यादावत्यन्तापह्नवस्थले सूत्रान्तरेण क्रियाया अपरोक्षत्वेऽपि लिड्विधानात् तादृशज्ञापकबलेन 'व्यातेने किरणावलीम्' इत्यत्र लिटः साधुत्वोपपादनमुपायकृतामयुक्तमेवेति बोध्यम् ।**

**अत्यन्तापह्नवश्च अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा । कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकं तेन विना तदसंभवात् । अत्यन्तापह्नवः स्वरूपसन्नेव लिट्साधुतानियामकः ।**

विवरणम्

अत्यन्तापह्नवमुपपादयितुं कलिङ्गे दृष्टोऽसीति परोक्त्यनुवादः ।

सूत्रान्तरेण — अत्यन्तापह्नवे लिड्वक्तव्यः इति वार्तिकेन ।

**तादृशज्ञापकबलेत्यादि** । नाहं कलिङ्गान् जगामेति स्थलविषयतयैव णलुत्तमो वेति शास्त्रोपपत्तेः तस्य ज्ञापकताकथनमसंगतमित्यर्थः ।

**स्वरूपसन्नेवेति** । एवेन शाब्दबोधे भानस्य व्यवच्छेदः ।

इदन्तु बोध्यम् । परोक्षत्वविवक्षैव लिटः साधुतानियामिकेत्यभिहितं भट्टाचार्यैः । यथा परोक्षेऽपि परोक्षत्वविवक्षाया अभावान्न लिट् भवति एवं अपरोक्षेऽपि परोक्षत्वविवक्षायां लिट् साधुः । व्यातेने इत्यत्र क्रियायाः परोक्षत्वं विवक्षितमाचार्यैः । किमर्थं विवक्षितमिति चेत् । इयं क्रिया अत्यनायासनिष्पाद्या यत्र काले मयापि न साक्षात्क्रियते इत्येवं अनायाससिद्धत्वप्रतीतये । युक्ता चेयं सरणिः व्यातेने इत्यत्र लिटः साधुत्वोपपादने ।

विवरणम्

कथमन्यथा लिडर्थस्य अनद्यतनत्वस्य भूतत्वस्य च तत्राभावेन लिटः साधुता भवेत् । सुकरत्वशीघ्रनिर्वर्त्यत्वादिप्रतीतिजननाय भूतत्वानद्यतनत्वादि-विवक्षायाः सत्त्वेन तत्साधुताया उपपादनीयत्वात् । न च वक्तृसाक्षात्कारा-विषयत्वरूपस्य परोक्षत्वस्य तत्र बाधात् आहार्यपरोक्षानङ्गीकाराच्च कथं तत्र शाब्दबोध इति वाच्यम् । गौणमुख्यसाधारणं परोक्षत्वं लिडर्थः । वक्तृसाक्षात्काराविषयत्वं मुख्यम् । अत्यनायासनिष्पन्नत्वं गौणं परोक्षत्वम् । तदेव व्यातेने इत्यत्र शाब्दबोधे भासते । गङ्गायां घोषः इत्यत्र शैत्यपावनत्वादिविशिष्टतीरस्य शाब्दबोधे भानमिवेति ।

केचित्तु श्येनेनाभिचरन्यजेतेत्यत्र यथा बाधात् लिङर्थस्य बलवदनिष्टा-ननुबन्धित्वस्य न धात्वर्थे भानम् । तथा व्यातेने इत्यत्र बाधात् लिडर्थः परोक्षत्वं धात्वर्थे न भासते । न च 'अध्यास्त सर्वर्तुसुखामयोध्यामित्यत्र परोक्षत्व-सत्त्वे परोक्षत्वाविवक्षया न लिट्' इति ग्रन्थेन परोक्षत्वविवक्षाया एव लिट्साधुतानियामकत्वं गम्यते इति तेन विरोध इति वाच्यम् । परोक्षत्व-विवक्षायां लिडेवेति तदाशयादिति वदन्ति ।

अन्ये तु व्यातेने इति विभक्तिप्रतिरूपकमव्ययमिति कल्पनान्न दोष इत्याहुः ।

अत्र "ननु यदि परोक्षत्वं लिडर्थः तदा अध्यास्त सर्वर्तुसुखामयोध्या-मित्यत्रायोध्यायाः परोक्षत्वेन लिट एव प्रयोगः स्यात् न त्वध्यास्तेति लङ्प्रयोग इत्याशङ्क्याह—अध्यास्तेति" (६०९ पृ·) इत्यादर्शः । लकारार्थस्य धात्वर्थाध्यासनक्रियायामेवान्वयः नायोध्यायामिति अयोध्यायाः परोक्षत्वं न लिडापत्तौ प्रयोजकम् । परन्तु अध्यासनक्रियाया एव । तस्मात् अयोध्यायाः परोक्षत्वोक्त्या अयोध्याधिकरणकाध्यासनक्रियाया एव परोक्षत्वं विवक्षितमिति बोध्यम् ।

**लिङ्लोटोर्विधिरर्थः । परप्रवृत्त्यर्थं तत्प्रयोगात् । विधिः प्रवर्तकज्ञानविषयो धर्मः । स च धर्मो न्यायनये**

विवरणम्

" एतादृशज्ञापकबलेन व्यातेने इत्यत्र लिटः साधुत्वोपपादनमुपायकारोक्तमयुक्तमेव । व्यातेने इत्यत्रात्यन्तापह्नवस्याभावात् क्रियाया अपरोक्षत्वेऽपि सूत्रान्तरेणोक्तेन अत्यन्तापह्नवस्थले एव लिड्विधानादित्यर्थः" (६१० पृ.) इत्यादर्शः । अत्रात्यन्तापह्नवाभावः तादृशज्ञापकबलेन लिटः साधुत्वोपपादनस्यायुक्तत्वे कथं हेतुर्भवति । अत्यन्तापह्नवे लिड्वक्तव्यः इति अनुशासनेन लिटः साधुत्वोपपादनस्यायुक्तत्वे हि तदभावो हेतुर्भवति । ज्ञापकबलेन लिडुपपादने अत्यन्तापह्नवः नापेक्षितः । तस्मादत्यन्तापह्नवे लिड्विधानं तादृशज्ञापकताविघटकमित्येव मूलाशयः : तस्य विघटकत्वञ्चेत्थम् । परोक्षत्वशून्येऽपि अत्यन्तापह्नवस्थले लिटो विधानात् तादृशस्थलविषयतयापि णलुत्तमो वेति शास्त्रचारितार्थ्यात् ज्ञापकताकथनमसङ्गतमिति ।

**प्रवर्तकज्ञानविषय इति** । प्रवृत्तिप्रयोजकज्ञानविषय इत्यर्थः । तदुक्तमाचार्यैः 'प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा । तज्ज्ञानं विषयस्तस्य विधिः' इति । जगदीशभट्टाचार्या आहुः 'प्रवर्तकचिकीर्षाया हेतुधीविषयो विधिः' इति । स्फुटीकरिष्यन्ति चेममर्थं भट्टाचार्याः बलवदनिष्टाननुबन्धित्वविचारावसरे । एतेन चिकीर्षया इष्टसाधनताज्ञानस्य प्रवृत्तावन्यथासिद्धत्वान्नेष्टसाधनत्वं प्रवृत्तिकारणज्ञानविषयः अतश्च तन्न लिङर्थ इति दूषणमपास्तम् । सर्वमतेऽपि लिङर्थज्ञाने प्रवृत्तिप्रयोजकत्वस्यैव सत्त्वेन प्रवृत्तिकारणज्ञानविषयस्यैव लिङर्थत्वमित्यस्यैवाभावात् । वस्तुतः व्यापारेण चिकीर्षया व्यापारिण. इष्टसाधनताज्ञानस्य नान्यथासिद्धिरित्यन्यत्र विस्तरः ।

**कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वसहितमिष्टसाधनत्वञ्च ।**

विवरणम्

प्रतिवादिनो मीमांसकस्यापि संमतं लिङर्थं प्रथमत आह — **कृतिसाध्यत्वमिति ।**

अस्य लिङर्थता अग्रे निराकरणीयेति पृथगुक्तिः । बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे शक्तिरिति पक्षाभिप्रायेणाह — **बलवदनिष्टाननुबन्धित्वसहितेति ।**

एतेन, इष्टसाधनत्वस्य लिङर्थत्वे, तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्यर्थवादेन ब्रह्महत्यातरणकामः अश्वमेधेन यजेत इति विधिकल्पनमनर्थकम् । तदर्थस्यार्थवादेनैव बोधनादिति दूषणं परास्तं वेदितव्यम् । केवलेष्टसाधनत्वस्यार्थवादेनावगतावपि प्रवर्तकस्य विशिष्टेष्टसाधनत्वस्य तेनानवगमात् तदवगमाय विधिकल्पनस्यावश्यकत्वात् ।

न च तथापि यागः इष्टसाधनं तस्मात्त्वं कुर्विति प्रयोगान्नेष्टसाधनत्वं लिङर्थः, न ह्येकस्यैव हेतुहेतुमद्भावो युज्यते इति वाच्यम् । यागशब्देन कृतिपर्यन्तस्याबोधनात् यागगतमिष्टसाधनत्वं हेतुः । कुर्वित्यत्र हि धात्वर्थकृतिगतमिष्टसाधनत्वं हेतुमत् बुध्यते । न च तयोरैक्यम् । तस्मान्न कोऽपि दोषः ।

अपि च आचार्यप्रेरणाविषयः गवानयनं तस्मात्त्वं कुर्विति प्रयोगात् प्रेरणापि न लिङर्थः स्यात् । गवानयनं कर्तुं शक्यं तस्मात्त्वं कुर्विति प्रयोगात् कृतिसाध्यत्वमपि न लिङर्थः स्यादिति सर्वपक्षसमानोऽयं

विवरणम्

दोषः । यदि च वारद्वयमुक्त्या अवश्यकर्तव्यत्वं प्रतीयते इति तत्प्रतीतये बोधितस्यापि पुनः बोधनमित्युच्यते । तदा पूर्वोक्तस्थलेऽपि तथैवेति न कोऽपि दोषः ।

न चैवमपि चैत्रीयपाककृतेर्वर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिः इष्टसाधनपाकानुकूलवर्तमानकृतेश्चैत्रे अबाधादिति वाच्यम् । चर्मणि द्वीपिनं हन्ति इत्यादौ हननकर्मद्वीपियोगः चर्मणः स्वरूपसन्नेव चर्मपदोत्तरसप्तम्याः साधुत्वे नियामकः । अत एव यत्र मृगचर्मार्थिना मध्ये स्थितं द्वीपिनमहत्वा वनं प्रवेष्टुमशक्तेन द्वीपी हतः, तत्र चर्मणि द्वीपिनं हन्तीति प्रयोगः न साधुः । तथा धात्वर्थानुकूलकृतेः भविष्यत्ता स्वरूपसती लिङः साधुत्वे नियामिका । तस्या भविष्यत्त्वे एव लिङन्तप्रयोगदर्शनेन तथा शब्दशक्तिस्वभावावगमात् । यदाहुः हरिवल्लभभट्टाचार्याः 'विध्यर्थप्रत्ययप्रकृत्यर्थस्य स्वाभाव्येन भविष्यत्तया प्रतीतिः' इति । वस्तुतो भविष्यन्ती क्रिया तत्र प्रतीयते इति तदाशयः । न तु भविष्यत्त्वं शाब्दबोधे भासते इति । विधिलिङः कालाबोधकतया तथा बोधासंभवात् । वैयाकरणनये धात्वर्थस्यैव आख्यातार्थकालसंबन्धितया भानात् वैयाकरणैस्तैः विध्यर्थप्रत्ययप्रकृत्यर्थस्येत्यभिहितम् । तस्मान्न कृतेर्वर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिरिति बोध्यम् ॥

कृतिसाध्यत्वादिषु त्रिषु इष्टसाधनत्वमभ्यर्हितम् । कृतिसाध्यताया लिङर्थत्वनिरासात् । नव्यनैयायिकैः बलवदनिष्टाननुबन्धित्वस्य लिङर्थत्वास्वीकारात् । उदयनाचार्यव्यतिरिक्तसर्वनैयायिकैः इष्टसाधनताया लिङर्थत्वाभ्युपगमात् । एवं कुर्यात् यतेथाः इत्यादौ बाधात्कृतिसाध्यत्वस्य,

**ओदनकामः पचेत्, स्वर्गकामो यजेत इत्यादावोदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाकयागादिक्रियायां प्रतीयते । तादृशफलानां च तत्तद्रूपेण लिङादिशक्यतावच्छेदककोटिप्रवेशे शक्त्यानन्त्यं सर्वसाधारण्येन व्युत्पत्त्यनुदयेनापूर्वफलसाधनत्व[96] बोधानिर्वाहश्चेतीष्टत्वेन तेषामनुगमः ।**

**इष्टत्वं समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् । अतः**

विवरणम्

श्येनेनाभिचरन्यजेतेत्यत्र बाधात् बलवदनिष्टाननुबन्धित्वस्य च न बोधः । इष्टसाधनत्वानवगाही च विधिवाक्यजन्यबोधो नास्ति । अतः अभ्यर्हितं इष्टसाधनत्वमादौ परिष्कर्तुं तदन्वयमाह — **ओदनकाम इत्यादिना** ।

क्रियायां प्रतीयते इत्यनेन कृताविष्टसाधनताज्ञानमेव चिकीर्षाकारणमिति लिङर्थस्य आख्यातार्थकृतावन्वयः इति रत्नकोशकारमतं स्वानभिमतमिति सूचितम् । तत्तद्रूपेण — ओदनत्वस्वर्गत्वादिना । व्युत्पत्त्यनुदयेन — शक्तिग्रहासंभवेन ।

ननु इष्टत्वमिच्छाविषयत्वं तच्चोदनेऽप्यस्ति इति स्वर्गकामः पचेतेत्यत्राभ्रान्तस्य पाके ओदनसाधनत्वबोधापत्तिरत आह — **इष्टत्वञ्चेति** ।

**समभिव्याहृतेति** । न चाहरहः सन्ध्यामुपासीतेत्यादौ कामनाबोधकपदसमभिव्याहाराभावात् निरुक्तेष्टसाधनताबोधः तत्र न संभवतीति

96. साधनबोध (ब. कृ.)

**स्वर्गकामः पचेत इत्यादौ शक्तिभ्रमशून्यस्य नौदनादिसाधनत्वधीः । न वा तत्तात्पर्येण तथा प्रयोगः प्रामाणिकानाम् । इष्टत्वज्ञानस्याप्रवर्तकत्वेऽपि शक्यफलानुगमार्थं तस्य शक्यता ।**

विवरणम्

वाच्यम् । तत्रापि नरकात्यन्ताभावकामः सन्ध्यामुपासीतेति समभिव्याहारं कल्पयित्वैव शाब्दबोधः । इत्थञ्च निरुक्तेष्टत्वं नरकात्यन्ताभावे अक्षतमिति तत्साधनताबोधः अव्याहतः ।

इष्टत्वज्ञानस्याप्रवर्तकत्वेऽपि — इष्टत्वविषयितायाः प्रवृत्तिकारणतावच्छेदककोट्यप्रविष्टत्वेऽपि ।

**शक्यतेति** । तथा चात्र पक्षे इष्टसाधनपाकानुकूलकृतिमानिति बोधः । इष्टत्वेनौदनो भासते इति बोध्यम् ।

अत्र "केवलमिष्टत्वज्ञानस्य प्रवर्तकत्वं न भवति । अन्यथा सुमेरुसमानयनेऽपि प्रवृत्तिः स्यादिष्टत्वात् इतीष्टत्वज्ञानस्याप्रवर्तकत्वेऽपि तस्य इष्टत्वस्य शक्यभूतस्वर्गादिफलानामनुगमार्थं शक्यता स्वीक्रियते । अन्यथा शक्त्यानन्त्यं स्यादित्यर्थः" (६११-पृ.) इत्यादर्शः । इष्टत्वज्ञानस्य प्रवर्तकत्वे सुमेरुसमानयने प्रवृत्तिर्नापादयितुं शक्यते । इष्टसाधनताज्ञानसत्त्वेऽपि प्रवृत्तिहेतोः कृतिसाध्यताज्ञानस्य विरहेण चन्द्रमण्डलाहरणादाविव तत्राप्यप्रवृत्तेरुपपत्तेः । इष्टत्वांशं विहाय विशिष्य इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्वस्वीकारमात्रेण कृतिसाध्यताज्ञानापेक्षा विना तत्र प्रवृत्तिवारणानुपपत्तेश्च । तस्मात् सामान्यतः इष्टसाधनमिति ज्ञानान्न प्रवृत्तिः । अपि तु इष्टतावच्छेदकधर्मं पुरस्कृत्य इष्टसाधनताज्ञानादेव । अतश्च स्वर्गत्वादिरूपेण तत्साधनताज्ञानादेव प्रवृत्तिनिर्वाहे स्वर्गादेरिष्टस्य इष्टत्वेन ज्ञानमपि

वस्तुतस्तु अशक्यस्यैव तस्य शक्यानुगमकता सर्वनामस्थले

विवरणम्

नापेक्ष्यते । इत्थञ्च इष्टत्वविषयतायाः प्रवृत्तिकारणतावच्छेदककोटिप्रवेशो नास्तीति, विधिवाक्यात् प्रवृत्तिकारणतानवच्छेदकविषयताशालिज्ञानस्यानपेक्षिततया लिङ्शक्यतावच्छेदककोटौ इष्टत्वस्य प्रवेशः किमर्थः इत्याशङ्क्य, शक्त्यानन्त्यपरिहाराय तस्य तत्र प्रवेशः इति इष्टत्वज्ञानस्याप्रवर्तकत्वेऽपीत्यादिग्रन्थेन निरूपितमिति बोध्यम् ।

**अशक्यस्यैवेति** । यथा तदादिशब्दानां अनन्तघटपटादिवाचकत्वेऽपि बुद्धिस्थत्वेन शक्यानामनुगमः नापि बुद्धिस्थत्वं शाब्दबोधे भासते अशक्यत्वात् । तथा ओदनस्वर्गादिनानाविधफलसाधनतावाचकलिङ्शक्यकोटिप्रविष्टानां फलानामनुगमकमशक्यमिष्टत्वम् । शाब्दबोधे च तन्न भासते इत्यर्थः ।

ननु इष्टत्वेन फलानां लिङ्पदसंकेते भानमावश्यकम् । अन्यथा शक्त्यैक्यासंभवात् । तथा हि नानाघटादिनिष्ठानां घटादिपदसंकेतविषयतानां घटत्वाद्यनुगतधर्मावच्छिन्नत्वेन घटपदशक्त्यैक्यम् । बुद्धिविषयतावच्छेदकावच्छिन्नः तत्पदबोध्यो भवतु इति संकेतविषयतायाः अननुगतघटत्वपटत्वादिनिष्ठायाः अनुगतबुद्धिविषयतावच्छेदकत्वावच्छिन्नतया तदादिपदानां शक्त्यैक्यम् । एवमिष्टसाधनत्वं लिङ्पदबोध्यं भवत्विति संकेतविषयतायाः

बुद्धिस्थ[97] त्ववत् । तेन रूपेण फलानां संकेतविषयतां विना शक्त्यै[98]-क्यासंभवात्तस्य संकेतविषयत्वोपगमेऽपि यथा न तस्य वाच्यता तथा प्रपञ्चितमन्यत्र । अत्र चेष्टत्वस्य शाब्दबोधेऽभानात् विशिष्ये[99] ष्टतावच्छेदकस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात् प्रवर्तकज्ञाननिर्वाहः ।

विवरणम्

अननुगतौदनस्वर्गादिनिष्ठायाः अनुगतेष्टत्वावच्छिन्नतया शक्त्यैक्यमुपपादनीयम् । इत्थञ्चेष्टत्वस्य संकेतविषयत्वात्कथं न तस्य शक्यता कुतो वा तन्न शाब्दबोधे भासते इत्युपपद्यते इत्यत आह — **तेन रूपेणेत्यादि** ।

अन्यत्र — शक्तिवादे । न केवलं संकेतविषयत्वं शक्यत्वम् अपि तु पदजन्यबोधविषयत्वेन संकेतविषयत्वम् । तच्च तदादिस्थले बुद्धिविषयतावच्छेदकत्वस्येव प्रकृते इष्टत्वस्यापि नास्ति । घटत्वावच्छिन्नः घटपदबोद्धव्यः इति संकेतः घटत्वं घटपदजन्यबोधविषयतावच्छेदकत्वेनावगाहते इति घटत्वं विशेषणमित्युच्यते । तच्च शाब्दबोधे प्रकारतया भासते । तत्पदजन्यबोधविषयतावच्छेदकत्वनिष्ठविषयतानिरूपितसंकेतीयविषयतावत्त्वं साक्षात्परम्परया वा तत्पदशक्यविशेषणत्वम् । तदेव शाब्दबोधे प्रकारतया भाने प्रयोजकम् । बुद्धिविषयतावच्छेदकावच्छिन्नः

97. बुद्धिस्थत्वं वा (कृ)

98. शक्यैक्यासंभवात् (ब. कृ.)

99. विशिष्टेष्टतावच्छेदक (ब. कृ)

**यत्तु इष्टत्वेन फलभानेऽपि स्वर्गकामादिपदैकदेशोपस्थित-स्वर्गत्वावच्छिन्नस्य विध्यर्थैकदेशे इष्टे अभेदान्वयात् प्रवर्तकज्ञाननिर्वाह**

विवरणम्

तत्पदबोद्धव्यः इति संकेतः बुद्धिविषयतावच्छेदकत्वं तत्पदजन्यबोध-विषयतावच्छेदकत्वेन नावगाहते । अपि तु बोधविषयत्वसामानाधिकरण्य-मात्रेण । अतश्च बुद्धिविषयतावच्छेदकत्वं न तत्पदशक्यविशेषणम् । अपि तूपलक्षणम् । तच्च शाब्दबोधे न प्रकारतया भासते । तत्प्रयोजकस्य निरुक्तरूपस्याभावादिति यथा । तथा इष्टसाधनत्वं लिङ्पद-बोध्यमिति संकेतः इष्टत्वे लिङ्पदजन्यबोधविषयतावच्छेदकत्वं नावगाहते । अपि तु बोधविषयत्वसामानाधिकरण्यमात्रमिति इष्टत्वमुपलक्षणं प्रयोजका-भावाच्छाब्दबोधे न प्रकारतया भासते इति समुदायार्थः ।

वस्तुतस्त्विति कल्पारम्भहेतुमाविष्करोति – **अत्र चेति** । अशक्य-स्यैवेष्टत्वस्य शक्यानुगमकत्वपक्षे चेत्यर्थः । विधिवाक्यादित्यस्य साक्षा-दित्यादिः ।

अत्र "तथा च यथा बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने तत्पदस्य शक्तिः तथात्र इष्टत्वोपलक्षितधर्मावच्छिन्नसाधनत्वे लिङः शक्तिरित्यर्थः" (६१२-पृ.) इत्यादर्शः । अशक्यस्येष्टत्वस्य शक्यफलानुगमकत्वं वस्तुतस्त्वित्यादि-ग्रन्थेनाभिहितम् । इष्टत्वं स्वर्गादिफलस्यैवानुगमकं न स्वर्गत्वादेः । कामनाविशेष्यत्वरूपं स्वारसिकमिष्टत्वमपि न स्वर्गत्वस्य । तस्मात् इष्टत्वोपलक्षितसाधनत्वे शक्तिरित्येव व्याख्येयम् ।

विध्यर्थैकदेशे — विधिरूपो यो लिङर्थः तदेकदेशे ।

अथवा विधिः — लिङ्प्रत्ययः तदर्थैकदेशे । प्रवर्तकज्ञाननिर्वाह इत्यस्य विधिवाक्यादेवेत्यादिः ।

इति । तन्न[100] सत् । वृत्तिशब्दैकदेशे इतरानन्वयनियमात् । स्वर्गत्वादिप्रकारेण कामनाधीनप्रवृत्तौ स्वर्गत्वादिविशेषितफलसाधनताज्ञानस्य हेतुतया अभेदेन स्वर्गादिविशेषितफलसाधनताज्ञानस्यानुपयोगित्वाच्च ।

अभेदेन स्वर्गादिप्रकारकस्वर्गादीष्टसाधनताज्ञानमपि स्वर्गत्वादिप्रकारकप्रवृत्तौ हेतुः । अत एव स्वर्गकामो यजेत इत्यादितः प्रवृत्तिः इति तु न युक्तम् । स्वर्गत्वप्रकारककामनाया अधिकारत्वानुपपत्तेः ।

विवरणम्

**वृत्तिशब्दैकदेशे इति** । स्वर्गकामशब्दस्य वृत्तित्वादिति भावः ।

**अनन्वयनियमादिति** । प्रतियोगिपदादन्यत् यदन्यत्कारकादपि । वृत्तिशब्दैकदेशेन न तस्यान्वय इष्यते ॥' इत्युक्तेरिति भावः ।

व्युत्पत्तिवैचित्र्येण तथान्वयस्वीकारेऽप्याह — **स्वर्गत्वादिप्रकारेणेति** ।

स्वर्गादिविशेषितफलसाधनताज्ञानस्य — स्वर्गाभिन्नफलसाधनं यागः इति ज्ञानस्य ।

अभेदेनेत्यादेः इति न युक्तमित्युत्तरेणान्वयः । **अधिकारत्वानुपपत्तेरिति** । साधनतांशे येन धर्मेण फलप्रकारकादिष्टसाधनताज्ञानात्प्रवृत्तिः,

100. तदपि न सत् (ब. कृ.)

**अथेष्टत्वस्य शक्योपलक्षणत्वे तदंशाभाननिर्वाहेऽपि स्वर्गत्वादे-**

विवरणम्

तद्धर्मप्रकारककामनाया एवाधिकारत्वात्, अभेदेन स्वर्गविशिष्टं यदिष्टं तत्साधनताज्ञाने साधनतांशे स्वर्गस्य स्वर्गत्वेन प्रकारतया अभानात् स्वर्गत्वप्रकारककामनाया अधिकारत्वं न स्यादिति भावः ।

स्वर्गनिष्ठधर्मावच्छिन्ननियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपस्वर्गसाधनत्वस्य लिङा बोधे व्यापकताघटकाधिकरणांशे स्वनिष्ठधर्मावच्छिन्नाधेयतानिरूपकत्वसंबन्धेन स्वर्गत्वेन स्वर्गस्य प्रकारतया भानात् सिद्धान्ते स्वर्गत्वप्रकारककामनाया अधिकारत्वमुपपद्यते ।

यद्धर्मावच्छिन्नसाधनताज्ञानात्प्रवृत्तिः तद्धर्मप्रकारककामनाया एवाधिकारत्वात् निरुक्तरीत्या शाब्दवर्णने स्वर्गत्वप्रकारककामनाया अधिकारत्वानुपपत्तिरिति व्याख्यानन्तु न समीचीनम् । तथा सति सिद्धान्तेऽपि तादृशकामनाया अधिकारत्वानुपपत्तितादवस्थ्यात् । स्वर्गनिष्ठवैजात्यरूपधर्मावच्छिन्नसाधनताशाब्दबोधस्य प्रवर्तकत्वेन स्वर्गत्वावच्छिन्नसाधनताज्ञानस्याप्रवर्तकत्वादिति ध्येयम् ।

स्वर्गत्वादिप्रकारककामनाधीनप्रवृत्तौ स्वर्गत्वादिरूपेण स्वर्गादिसाधनताज्ञानमेव हेतुः । यजेत स्वर्गकामः इति वाक्याच्च स्वर्गत्वेन स्वर्गं प्रति साधनताबोधः न संभवति स्वर्गत्वस्याशक्यत्वादिति विधिवाक्यात् प्रवर्तकज्ञानानिर्वाहं शङ्कते — **अथेति** ।

रशक्यस्य भानं न संभवति । अशक्यस्य भानोपगमेऽतिप्रसङ्गादिति चेत् । स्वर्गत्वाद्यवच्छिन्ने समभिव्याहृतकामनाविषयत्वज्ञानसहकृतस्य तादृशकामनाविषयतावच्छिन्नशक्तिज्ञानस्य स्वर्गत्वादिप्रकारकशाब्दधीहेतुत्वोपगमेऽतिप्रसङ्गानवकाशात् ।

वस्तुतः तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात् सर्वसामञ्जस्यम् ।

विवरणम्

**अतिप्रसङ्गादिति** । यजेत स्वर्गकामः इति वाक्याधीनबोधे स्वर्गांशे अशक्यस्य स्वर्गत्वस्येव ओदनत्वप्रमेयत्वादेरपि भानापत्तिरूपातिप्रसङ्गादित्यर्थः ।

**समभिव्याहृतकामनेति** । समभिव्याहृतपदोपस्थापितकामनेत्यर्थः ।

विनैव क्लेशं स्वर्गत्वस्यापि शक्यतां स्वीकृत्य स्वर्गत्वेन स्वर्गसाधनताबोधमुपपादयति — **वस्तुतस्त्विति** ।

**सामञ्जस्यमिति** । न च यागस्य स्वर्गाव्यवहितपूर्ववृत्तित्वं स्वजन्यापूर्ववत्त्वसंबन्धेन वक्तव्यम् । अपूर्वञ्च यागे स्वर्गसाधनताबोधात्पूर्वमनुपस्थितमिति कथं लिङा स्वर्गसाधनताबोधः संभवतीति वाच्यम् । अपूर्वाख्यव्यापारानुपस्थितावपि सामान्यतः स्वाश्रयत्व, स्वाश्रयनिरूपितव्यापारत्ववत्त्वान्यतरसंबन्धेन स्वर्गनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपस्य स्वर्गसाधनत्वस्य बोद्धुं शक्यत्वात् ।

**न च स्वर्गत्वादिविशिष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वं न संभवति स्वर्गत्वादेः गङ्गास्नानादिजन्यस्वर्गादिसाधारण्येन यागादिजन्यतानवच्छेदकतया यागादौ स्वर्गत्वादिविशिष्टसाधनत्वबाधात् । न हि जन्यतानवच्छेदकधर्मो [101] जनकत्वनिरूपके विशेषणमिति वाच्यम् । स्वर्गत्वादेः शक्यविशेषणत्वेऽपि तदुपलक्षितवैजात्यावच्छिन्ननिरूपितजनकताया यागादावबाधितायाः स्वर्गादिजनकतात्वेन विधिप्रत्ययतो भानसंभवात् । घटत्वादिविशिष्टवाचकपदघटितात् घटं द्रव्यत्वेनैव जानाति इत्यादिवाक्यात् घटत्वाद्युपलक्षितघटादिविशेष्यकत्वभानवत् ।**

विवरणम्

**गङ्गास्नानादिजन्यस्वर्गादिसाधारण्येनेति** । यागं विनापि गङ्गास्नानादिना स्वर्गत्वावच्छिन्नोत्पत्त्या व्यतिरेकव्यभिचारान्न स्वर्गत्वं यागजन्यतावच्छेदकमपि तु स्वर्गगतं वैजात्यमेवेति भावः ।

जनकत्वनिरूपके -- जन्ये ।

**घटं द्रव्यत्वेनैव जानातीति** । अस्माद्वाक्यात् घटविशेष्यकं द्रव्यत्वान्याप्रकारकं द्रव्यत्वप्रकारकं यद्ज्ञानं तदाश्रयः इति बोधो जायते । अत्र घटशब्दस्य घटत्वविशिष्टवाचकत्वेऽपि घटत्वविशिष्टविशेष्यकज्ञानाश्रय इति न बोधः । तथा सति घटांशे घटत्वप्रकारकस्यैव ज्ञानस्य घटत्वविशिष्टविषयकत्वसंभवेन तादृशज्ञानस्य द्रव्यत्वान्याप्रकारकत्वानुपपत्तेः

101. जन्यत्वनिरूपके (का. आ.)

विवरणम्

इति घटत्वाश्रयविशेष्यकत्वमेव तत्र द्वितीयान्तेन धात्वर्थे ज्ञाने बोध्यते इति भावः ।

अत्र "उक्ते हेतुमाह — **न हीति** । अत्र जन्यतानवच्छेदकं यत् स्वर्गत्वं तस्य जन्यत्वनिरूपके जनके साधने विशेषणत्वं न संभवति जन्यतानवच्छेदकधर्मावच्छिन्ननिरूपिता जनकता न भवति । अत्र च त्वया यागे स्वर्गसाधनत्वं वक्तव्यम् । तत्र च स्वर्गत्वस्यापि विशेषणत्वं प्राप्तमेवेत्याशङ्क्याह — न चेति" (६१४-पृ.) इत्यादर्शः । पूर्वं यागादौ स्वर्गत्वविशिष्टसाधनत्वबाधादित्यभिहितम् । स एवार्थः न हीत्यादिना उपपाद्यते । स्वर्गत्वस्य जनकतानिरूपकस्वर्गविशेषणत्वं न संभवतीत्यय-मेवार्थः पूर्वोक्तोपपादको भवतीति 'न हि जन्यतानवच्छेदको धर्मः जनकत्व-निरूपके विशेषणम्' इति मूलपाठ एव समञ्जसः । आदर्शस्तु न हि जन्यतानवच्छेदको धर्मः जन्यत्वनिरूपके विशेषणम् इति पाठमवलम्ब्य प्रवृत्तः । न ह्येवं पाठकल्पने अनुपदोक्तार्थोपपादनं संपद्यते । स्वर्गत्व-विशिष्टसाधनत्वबाधादित्यत्र स्वर्गे एव स्वर्गत्वं विशेषणतया भासते । अतश्च स्वर्गत्वस्य स्वर्गविशेषणत्वमेव नास्तीत्युत्तरग्रन्थेन निरूपणीयम् । न तु तस्य यागविशेषणत्वं नास्तीति । आदर्शाभिमतपाठे तु स्वर्गत्वस्य जन्यतानिरूपकयागविशेषणत्वाभाव एव निरूप्यते । तच्चानुपयुक्तम् । स्वर्गत्वस्य यागविशेषणत्वमपि क्लेशेनोपपादितमिति सुधियो विवेचयन्तु ।

"ननु स्वर्गत्वस्य विशेषणत्वे वैजात्योपलक्षणत्वं कथं स्यादित्याशङ्क्य दृष्टान्तमाह — **घटत्वेति** घटं द्रव्यत्वेनैव जानातीत्यत्र यद्यपि घटत्वं

विवरणम्

शक्यघटविशेषणमेव । तथाप्यत्र घटत्वोपलक्षितद्रव्यत्वप्रकारकघटविशेष्यकं भानं भवति। एतादृशविशेष्यकत्वभाने यथा शक्यविशेषणस्यापि घटत्वस्य द्रव्यत्वोपलक्षणत्वम् । तथोक्तस्थले शक्यस्वर्गविशेषणस्यापि स्वर्गत्वस्योक्त-वैजात्योपलक्षणत्वं संभवत्येवेत्यर्थः । स्वर्गत्वस्य स्वर्गविशेषणत्वेऽपि सामाना-धिकरण्येन वैजात्योपलक्षणत्वे बाधकाभावात् यद्विशेषणत्वं तदुपलक्षणत्वे एव विरोधादिति सारः'' (६१४-पृ.) इत्यादर्शः । अत्र घटं द्रव्यत्वेनैव जानातीत्यत्र घटत्वं न द्रव्यत्वे उपलक्षणतया भासते । परन्तु घटविशेष्यकं द्रव्यत्वप्रकारकं यद्ज्ञानं तदाश्रय इति बोधस्तस्माज्जायते । घटत्वाद्युप-लक्षितघटादिविशेष्यकत्वभानवदिति ग्रन्थेन न कथमपि तत्र घटत्वोपलक्षित-द्रव्यत्वप्रकारकबोधस्तत्रेति अवगन्तुं शक्यते । परन्तु घटत्वशिष्टविशेष्यकत्व-बोधो नास्ति । विशेष्यत्वविशेषणतया भासमाने घटे घटत्वं न प्रकारतया भासते इति यावत् । परन्तु घटत्वाश्रयविशेष्यकत्वमेव भासते इत्येवा-वगच्छामः । तथा च स्वर्गत्वस्य वैजात्योपलक्षणत्वे दृष्टान्ततया घटत्वस्य द्रव्यत्वोपलक्षणताया उपन्यासः इति व्याख्यानं न समञ्जसम् । अपि च एकत्र विशेषणस्यान्यत्रोपलक्षणत्वं न विरुद्धम् । किन्तु यदा यत् यत्र विशेषणतया भासते तदैव तत्तत्रोपलक्षणतया न भासते । एवञ्च स्वर्गत्वस्य वैजात्यौपलक्षणत्वे कथन्ताशङ्कया एतद्ग्रन्थावतारणमप्यशुद्धम् । परं तु स्वर्गजनकतात्वेन विधिप्रत्ययतो भानसंभवादित्यभिहिते सति, जाता स्वर्गत्वादिविशिष्टसाधनत्ववाचकाल्लिङः कथं स्वर्गत्वोपलक्षितसाधनताग्रहः संभवतीति शङ्का, तद्विशिष्टवाचकपदघटितवाक्यात् तदुपलक्षितबोधसंभवे दृष्टान्तकथनेन निराक्रियते घटत्वादिविशिष्टेत्यादिग्रन्थेनेति बोध्यम् ।

न च तद्धर्मावच्छिन्ननिरूपिततत्साधनताज्ञानं विना तद्धर्मप्रकारकफलेच्छाधीनप्रवृत्त्यनिर्वाह इति शङ्क्यम् । वह्नित्वादिप्रकारकेच्छातोऽपि तृणादिसमवधानेऽभ्रान्तप्रवृत्तेरानुभविकत्वात् भूयः सुखार्थिनामपि भ्रमं विना क्रियाविशेषे प्रवृत्तेश्च तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफलं प्रति साधनताज्ञानस्यैव प्रवर्तकत्वात् । स च धर्मः कार्यतावच्छेदकतया भासतां कार्यांशे उपलक्षणतयैव वेत्यन्यदेतत् । न हि वह्नित्वादिकं तृणादिजन्यता-

विवरणम्

**अनिर्वाह इति** । स्वर्गत्वावच्छिन्ननिरूपितसाधनताज्ञानस्याभावादिति भावः ।

शङ्कोक्तं कार्यकारणभावं व्यतिरेकव्यभिचाराभ्यां दूषयति — **वह्नित्वादिप्रकारकेत्यादिना** ।

**कार्यतावच्छेदकतयेति** । घटत्वादिप्रकारककामनाधीनप्रवृत्तिकारणे इष्टसाधनताज्ञाने घटत्वादिकं दण्डादिनिरूपितकार्यतावच्छेदकतया भासते ।

**उपलक्षणतयेति** । वह्नित्वप्रकारककामनाधीनप्रवृत्तिहेतौ वह्नित्वोपलक्षितवैजात्यावच्छिन्नसाधनताज्ञाने कार्यांशे वह्नित्वमुपलक्षणतया भासते । पूर्वोक्तं प्रथमं व्यभिचारं स्फुटयति — **न हीत्यादिना** ।

**वच्छेदकं व्यभिचारिसाधारणत्वात् । न वा भूयस्त्वादिकं कस्य चिज्जन्यतावच्छेदकं अर्थवशसंपन्नत्वात् ।**

विवरणम्

व्यभिचारिसाधारणत्वात् — तृणत्वावच्छिन्नसमवधानशून्ये अरणिनिर्मन्थनसंयोगादिमति वह्नौ विद्यमानत्वात् । द्वितीयं व्यभिचारं स्पष्टयति— **न वेति** ।

अर्थवशसंपन्नत्वात् — अर्थसमाजग्रस्तत्वात् ।

"भूय इति क्रियाविशेषे — भोजनादौ हि तृप्तिसाधनत्वमेवास्ति न तु सामान्यतः सुखसाधनत्वम् । अन्यथा तृप्त्यतिरिक्तसुखेच्छावतोऽपि भोजने प्रवृत्तिः स्यात् । न चैवं भवति । अथापि सुखार्थिनो भोजनादौ प्रवृत्तिर्भवति । तत्कस्य हेतोः । सुखत्वस्य तृप्तित्वादिव्यापकत्वादेव" (६१५-पृ·) इत्यादर्शः । अस्य हि सुखत्वप्रकारककामनया सुखत्वावच्छिन्नाजनके सुखत्वव्याप्यतृप्तित्वाद्यवच्छिन्नसाधने भोजने प्रवृत्तिर्दृश्यते इति निष्कृष्टोऽर्थः । एवं मूलाशयवर्णने मूले भूयःपदमनवसरे प्रयुक्तमिति स्यात् । तस्य प्रकृतानुपयोगात् । एवं 'न हि भूयस्त्वादिकं कस्य चिज्जन्यतावच्छेदकमर्थवशसंपन्नत्वात्' इति अग्रिमग्रन्थेन एतद्विवरणपरेण विरोधश्च । तस्मात् भूयस्सुखकांक्षी क्रियाविशेषे प्रवर्तते । न हि तत्र भूयस्सुखत्वावच्छिन्नसाधनताज्ञानं वर्तते । तस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकत्वादित्येव मूलाशयो वर्णनीय इति बोध्यम् ।

**एवं सति घटत्वावच्छिन्नफलार्थी तन्त्वादौ कथं न प्रवर्तते तन्त्वादेरपि घटत्वाद्युपलक्षितजन्यसत्त्वादि[102] विशिष्टनिरूपितद्रव्यत्वावच्छिन्नसाधनतावत्त्वादिति चेत् । फलानुपधाननिश्चयात् तस्य स्वातन्त्र्येण प्रवृत्तिप्रतिबन्धकत्वात् ।[103] फलोपधायकत्वरूपसाधनत्वस्य विधिप्रत्ययार्थतया घटकामस्तन्तुमुपाददीत इत्यादिर्न प्रयोगः ।**

विवरणम्

**साधनतावत्त्वादिति ।** सत्तावतो जन्यस्य समवायेन द्रव्यादन्यत्रानुत्पत्तेः समवायेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणता स्वीकार्या । घटस्यापि जन्यसत्त्वरूपकार्यतावच्छेदकाक्रान्तत्वात् तन्तोरपि कारणतावच्छेदकद्रव्यत्वाक्रान्तत्वात् घटसाधनत्वं तन्तावप्यस्तीति भावः ।

नन्वेवं फलानुपधाननिश्चयरूपप्रतिबन्धकसत्त्वेन घटकामस्य पुंसः तन्तूपादाने प्रवृत्तिवारणेऽपि घटकामस्तन्तुमुपाददीतेति प्रयोगापत्तिर्दुर्वारा । घटत्वोपलक्षितजन्यसत्त्वावच्छिन्नकार्यतानिरूपितद्रव्यत्वावच्छिन्नकारणतायाः लिङर्थस्य धात्वर्थे तन्तूपादाने अबाधितत्वादित्यत आह — **फलोपधायकत्वरूपेति ।** अव्यवहितपूर्वत्वसंबन्धेन फलविशिष्टत्वरूपेत्यर्थः ।

102. जन्यत्वादिविशिष्ट (का. आ.)

103. फलोपधायकसाधनत्वस्य वा (ब. कृ. का. आ.)

**न च तथापि स्वर्गत्वादेर्यागादिनिष्ठकारणताघटकव्यापकतानिरूपकतानवच्छेदकतया स्वर्गत्वावच्छिन्ननिरूपितव्यापकताघटितकारणताया बाधः । स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य च**

विवरणम्

अत्र "पक्षान्तरमाह फलोपधायकेति" (६१६-पृ) इत्यादर्शः । घटकामस्तन्तुमुपाददीत इति प्रयोगः यदि प्रकारान्तरेण पूर्वं वारितः स्यात् । तदा फलोपधायकत्वरूपसाधनत्वस्य लिङर्थतास्वीकाररूपपक्षान्तरमाह इत्यवतारणं युक्तं भवेत् । नह्यत्र पूर्वं तादृशप्रयोगो वारितः । परन्तु तद्धर्मावच्छिन्नासाधनेऽपि तद्धर्मप्रकारेण भासमानफलं प्रति साधने प्रवृत्तेरुपपादने, घटत्वावच्छिन्नार्थिनः तन्तुषु प्रवृत्तिरापादिता, घटत्वावच्छिन्नानुपधायकत्वनिश्चयरूपप्रतिबन्धकबलात् परिहृता । ततश्च प्रवृत्त्यभावस्योपपादनेऽपि घटकामस्तन्तुमुपाददीत इति प्रयोगापत्तिर्दुर्वारा । लिङा सामान्यतः घटसाधनत्वस्यैव बोधनात्तस्य चाबाधितत्वादित्याशङ्कायां, फलोपधायकत्वस्य लिङर्थतास्वीकारेण तादृशप्रयोगवारणमभिधत्ते फलोपधायकेत्यादिग्रन्थः । वाकाररहितः पाठः । यदि वाकारसहितपाठप्रामाण्ये आग्रहः तदा वाशब्दः चार्थे इति मन्तव्यम् । वाकारसहितं मूलपाठमुपलभ्य, सामान्यतः पक्षान्तरमाह --इत्यवतारितमादर्शकारैरिति चिन्तनीयम् ।

साधनतायाः कार्यव्यापकतारूपत्वात् व्यापकतायाश्च व्याप्यतावच्छेदकाघटिताया दुर्निरूपत्वात् यागनिष्ठस्वर्गव्यापकतानिरूपकतावच्छेदकस्य वैजात्यस्य पूर्वमनुपस्थितेः, उपस्थितस्य च स्वर्गत्वस्य व्यापकतानिरूपकतानवच्छेदकत्वात् यजेत स्वर्गकाम इति वाक्यात् स्वर्गसाधनताबोधो न संभवतीति शङ्कते — **न चेति** ।

**कारणताग्रहोत्तरकालकल्प्यत्वेन प्रागनुपस्थित्या तदवच्छिन्ननिरूपित-व्यापकताबोधासंभव इति स्वर्गकाम इत्यादौ विध्यर्थबोधानुपपत्ति-र्दुर्वारैवेति वाच्यम् । स्वरूपसंबन्धरूपाया एव कारणताया विध्यर्थ-त्वोपगमात् ।**

विवरणम्

**कारणताग्रहोत्तरकालकल्प्यत्वेनेति** । यागे स्वर्गकारणताज्ञानोत्तरं विनापि यागं गङ्गास्नानादिना स्वर्गोत्पत्त्या व्यभिचारस्फूर्तौ तद्वारणाय वैजात्यस्य कार्यतावच्छेदकस्य कल्पनादिति भावः ।

**स्वरूपसंबन्धरूपाया इति** । यागात्स्वर्गः इति प्रतीतिसिद्धा यागादिस्वरूपा व्यापकत्वानात्मिका साधनता लिङर्थ इति भावः ।

विध्यर्थत्वोपगमात् — लिङर्थत्वोपगमात् ।

अत्र "उत्तरमाह—स्वरूपसंबन्धेति । स्वरूपसंबन्धरूपायाः — स्वरूपयोग्यतारूपायाः । स्वरूपयोग्यतारूपा तु कारणता स्वर्गत्वावच्छिन्न-निरूपिता यागे अस्त्येवेति न विध्यर्थबोधानुपपत्तिः" (६१६-पृ०) इत्यादर्शः । न हि व्यभिचारिसाधारणस्य धर्मस्य स्वरूपयोग्यतारूप-कारणतानिरूपकतावच्छेदकत्वं कैरपि शास्त्रकारैरङ्गीकृतम् । अतः व्यभि-चारिसाधारणस्वर्गत्वावच्छिन्नकार्यतानिरूपिता स्वरूपयोग्यतारूपकारणता यागे नास्त्येवेति तथा भाववर्णनमसंगतम् । स्वरूपसंबन्धरूपाया इत्यस्य स्वरूपयोग्यतारूपाया इति व्याख्यानमपि साहसविलसितमेव ।

अत्रैव "किं वा स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य फलोपधायकता-रूपकारणतायाः ग्रहोत्तरमपि कल्प्यत्वं, स्वरूपयोग्यतारूपकारणतायास्तु

विवरणम्

पूर्वमपि कल्प्यत्वं संभवत्येवेति तादृशवैजात्यावच्छिन्ननिरूपितायाः स्वरूपसंबन्धरूपायाः 'व्यापकताघटितकारणतायाः यागे बाधो नास्तीति न विध्यर्थबोधानुपपत्तिरित्यर्थः" इत्यादर्शः प्रवृत्तः ।

यागे स्वर्गकारणताग्रहोत्तरं व्यभिचारोपस्थित्या तत्परिहाराय वैजात्यं कल्प्यते । व्यतिरेकव्यभिचारः यथा फलोपधानात्मककारणताविघटकः तथा स्वरूपयोग्यतारूपकारणताविघटकोऽपि । सति चैवं, फलोपधायकत्वात्मककारणताग्रहोत्तरं वैजात्यस्य कल्पनं, स्वरूपयोग्यतात्मककारणताग्रहात्तु पूर्वमपि तस्य कल्पनमिति वचनं न युक्तिमत् । कारणताग्रहात्पूर्वं वैजात्यकल्पकव्यभिचारस्फुरणाभावात् । एवं फलोपधायकतारूपकारणतायाः ग्रहोत्तरमपि इत्यत्रापिशब्दः किमर्थ इत्यपि विचारणीयम् । किञ्च वैजात्यावच्छिन्ननिरूपितायाः स्वरूपयोग्यतात्मककारणतायाः बोधसंभवे, कारणतायाः स्वरूपसंबन्धरूपत्वकथनं निरर्थकम् । अपि च स्वरूपसंबन्धरूपायाः व्यापकताघटितकारणताया इति ग्रन्थः अशुद्धः । व्यापकताघटितकारणतायाः स्वरूपसंबन्धरूपत्वस्य बाधितत्वात् । किञ्च व्यापकताघटितकारणतायाः बाधो नास्तीति विवरणमसङ्गतम् । यागे वैजात्यावच्छिन्नजनकताबाधशङ्काया एवाभावात् । परन्तु कारणत्वस्य व्यापकताघटितत्वात् तस्य च व्याप्यतावच्छेदकाघटितस्य दुर्वचत्वात् तादृशकारणताबोधो न संभवतीत्याक्षेपः व्यापकतानात्मकस्वरूपसंबन्धरूपकारणत्वस्य लिङर्थत्वोपगमेन परिहृतः इति सुधीभिर्बोध्यम् ।

**अन्यथासिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव वा**[104] **स्वर्गकारणत्वम्। नियतोत्तरवर्तितावच्छेदकश्च धर्मो विशिष्योत्तरकालकल्प्यः जातिविशेष एव । नियतोत्तरवर्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते । नियतोत्तरवर्तितावच्छेदकत्वञ्च कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नतद्व्यापारा-**[105]

विवरणम्

गौरवेण कारणतायाः स्वरूपसंबन्धरूपत्वानङ्गीकारेऽपि विशिष्य कार्यतावच्छेदकाघटितं सामान्यतस्तद्घटितं कारणत्वं परिष्कृत्य यजेतेत्यत्र स्वर्गसाधनताबोधमुपपादयति — **अन्यथासिद्धीत्यादिना** ।

निरूपकतानवच्छेदकः यः नियतोत्तरवर्तितावच्छेदकः धर्मः इत्यन्वयः । उत्तरकालकल्प्यः—स्वर्गसाधनताबोधानन्तरकाले व्यभिचारशङ्कायां सत्यां तत्परिहाराय कल्पनीयः ।

नियतोत्तरवर्तितावच्छेदकत्वं यदि स्वावच्छिन्ननिरूपितपूर्वकालावच्छिन्नवृत्तिकाभावघटितव्यापकताश्रयतत्कत्वं, तदा स्वर्गनिष्ठस्य वैजात्यस्य विशिष्य ज्ञानं विना निरुक्तसाधनताबोधो न संभवति स्वपदार्थस्य ज्ञेयत्वात् । अतस्तन्निर्वक्ति — **नियतोत्तरवर्तितावच्छेदकत्वञ्चेति** ।

104. वा नास्ति (ब. कृ.)

105. तद्व्यापाराभाव (ब. कृ.)

न्यतराभावाधिकरणताविशिष्टोत्पत्तिक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वम् । अधिकरणतावैशिष्ट्यञ्च स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वसंबन्धेन ।

वस्तुतः स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम् । नियतपूर्ववर्तितावच्छेदकत्वञ्च अव्यवहितपूर्वकालावच्छिन्नवृत्तिकाभावघटितदैशिकव्यापकतायाः स्वाश्रयत्व,[106] स्वाश्रयनिरूपितव्यापारत्ववत्त्वान्यतरसंबन्धेनावच्छेदकत्वमेव। व्यापकत्वनिरूपकतावच्छेदकवैजात्यस्य विशिष्यानुपस्थितावपि स्वर्गधर्मत्वेन ज्ञानं संभवत्येव ।

विवरणम्

कारणतद्व्यापारान्यतराभावाधिकरणतावति प्रदेशे तदवच्छेदकक्षणानन्तरक्षणावच्छेदेन यद्धर्मावच्छिन्ननिरूपिताधिकरणता नास्ति स धर्मः नियतोत्तरवर्तितावच्छेदकः इति फलितोऽर्थः । दण्डाभाववत्यपि प्रदेशे, घटत्वावच्छिन्ननिरूपिताधिकरणतायाः सत्त्वात् घटत्वं दण्डनियतोत्तरवर्तितावच्छेदकं न स्यादतः **उत्पत्तिक्षणावच्छिन्नेति** ।

तथा च दण्डाभाववति घटः नोत्पद्यते इति उत्पत्तिक्षणावच्छिन्ना घटत्वावच्छिन्नाधिकरणता नास्तीति न दोषः। स्वर्गगतवैजात्यस्य यागनियतोत्तरवर्तितावच्छेदकत्वनिर्वाहाय व्यापारघटनम् ।

वक्ष्यमाणास्वरसादाह — **वस्तुत इति** ।

स्वर्गनिष्ठवैजात्यावच्छिन्नाधिकरणे आत्मनि पूर्वकालावच्छेदेन विद्यमानाभावप्रतियोगितावच्छेदकत्वमेव यागत्वे, यागस्येच्छाविशेषाद्यात्मकस्य क्षणद्वयावस्थायित्वादित्याशङ्कायां, कार्यनियतपूर्ववृत्तिस्वस्वव्यापारान्यतरकत्वं कारणत्वमिति प्राचीनपरिष्कारमनुसृत्य निर्वक्ति — **नियतपूर्ववर्तितावच्छेदकत्वञ्चेति** । दण्डादिनिष्ठायां घटादिव्यापकतायां स्वाश्रयत्वसंबन्धेन

106 स्वाश्रयत्व स्वाश्रयनिष्ठव्यापारवत्त्वान्यतरसंबन्धेन (का. आ.)

विवरणम्

दण्डत्वादिकमवच्छेदकम् । अपूर्वनिष्ठाया स्वर्गव्यापकतायां स्वाश्रययाग-निरूपितव्यापारत्ववत्त्वसंबन्धेन यागत्वमवच्छेदकं भवति । एवञ्च स्वर्ग-निष्ठवैजात्यावच्छिन्नाधिकरणनिरूपितपूर्वकालावच्छिन्नवृत्तिकाभावप्रतियोगिता-निरूपितस्वाश्रयनिरूपितव्यापारत्ववत्त्वसंबन्धावच्छिन्नावच्छेदकत्वाभावरूपं नियतपूर्ववर्तितावच्छेदकत्वं यागत्वस्येति भावः ।

अत्र “ नियतपूर्ववृत्तितावच्छेदकत्वं हि उक्तव्यापकताया उक्तसंबन्धेना-वच्छेदकत्वरूपमेव विज्ञेयम् । स्वाश्रयत्वसंबन्धेनेत्यस्य स्वसामानाधिकरण्य-संबन्धेनेत्यर्थः । स्वं यागत्वं, तथा च यागत्वं उक्तव्यापकता च यागे एवास्तीति स्वसामानाधिकरण्यसंबन्धेन यागत्वं व्यापकताया अवच्छेदकं जातम् । किं वा स्वाश्रयनिष्ठव्यापारवत्त्वसंबन्धेनावच्छेदकत्वं ग्राह्यम् । तत्रापि स्वं यागत्वं तदाश्रयो यागः जनकत्वसंबन्धेन यागनिष्ठः यः अपूर्वादिरूपो व्यापारः तद्वत्त्वं व्यापकतायां सामानाधिकरण्येनास्ति यागे एव व्यापारस्य जनकतायाश्च सत्त्वादिति तादृशेन स्वाश्रयनिष्ठव्यापारवत्त्व-संबन्धेन यागत्वं व्यापकताया अवच्छेदकं जातमित्येतादृशं यत् व्यापकता-वच्छेदकत्वं तदेव नियतपूर्ववृत्तितावच्छेदकत्वमित्यर्थः प्रतिभाति । अत्र स्वाश्रयनिरूपितव्यापारत्ववत्त्वेति पाठस्तु प्रामादिक एव प्रतीयते” (६१८ पृ.) इत्यादर्शः ।

अत्रोक्तान्यतरसंबन्धः व्यापकतावच्छेदकतावच्छेदकसंबन्धः । येन संबन्धेन यद्धर्मविशिष्टस्य व्यापकत्वं स धर्मः तेन संबन्धेन व्यापकतावच्छेदकः भवति । समवायेन वह्नित्वविशिष्टस्य

विवरणम्

धूमव्यापकत्वात् वह्नित्वं समवायेन धूमव्यापकतावच्छेदकमिति व्यवह्रियते। न तु व्यापकतायां येन संबन्धेन यो धर्मो वर्तते स धर्मः तेन संबन्धेन व्यापकतावच्छेदकः। न हि वह्निनिष्ठाया व्यापकतायां सामानाधिकरण्यसंबन्धेन विद्यमानवह्नित्वं सामानाधिकरण्यसंबन्धेन व्यापकतावच्छेदकमिति कैरपि तान्त्रिकैर्व्यवह्रियते। तस्मात् यागनिष्ठव्यापकताया सामानाधिकरण्यसंबन्धेन यागत्वमवच्छेदकमिति व्याख्यानमशुद्धम्। स्वाश्रयत्वमित्यस्य स्वसामानाधिकरण्यमित्यर्थविवरणमपि अशुद्धम्। किञ्च स्वर्गोत्पत्त्यव्यवहितपूर्वक्षणे आत्मनि यागाभावस्य सत्त्वेन यागे कथं दैशिकव्यापकत्वं उपपादयितुं शक्यते इत्यप्यालोचनीयम्।

किं वेत्यादिना स्वाश्रयनिष्ठव्यापारवत्त्वसंबन्धस्य व्यापकतावच्छेदकतावच्छेदकसंबन्धत्वोपपादनमपि पूर्वोक्तयुक्त्या हेयम्। तत्रापि व्यापारस्य यागनिष्ठत्वं स्वरसतो न संभवतीति जनकतासंबन्धेन तन्निष्ठत्वोपपादने क्लेशः। तद्वत्त्वमपि व्यापकतायामानेयमिति कृत्वा सामानाधिकरण्यसंबन्धेन तद्वत्त्वमुपपादितम्। अत्र स्वाश्रयनिष्ठव्यापारवत्त्वं स्वाश्रये एव प्रतीयते इत्येतादृशसंबन्धघटनस्य न किमपि प्रयोजनं लक्ष्यते। स्वाश्रयत्वसंबन्धेन यागत्वे व्यापकतावच्छेदकत्वोपपादने अन्यतरसंबन्धोपादानं विफलम्। यागे दैशिकव्यापकत्वासंभवश्च प्रतिपादितः।

वस्तुतः दण्डत्वयागत्वादिसाधारणं नियतपूर्ववृत्तितावच्छेदकत्वं परिष्कृतं मूले। तत्र स्वाश्रयत्वसंबन्धेनावच्छेदकत्वं दण्डत्वादीनाम्। अन्यसंबन्धेन यागत्वस्यावच्छेदकत्वम्। स्वाश्रयत्व,

विवरणम्

स्वाश्रयनिरूपितव्यापारत्ववत्त्वान्यतरसंबन्धेन इति पाठः समीचीनः । स्वाश्रयत्वसंबन्धेन दण्डत्वविशिष्टस्य दण्डस्य घटव्यापकत्वात् दण्डत्वं तेन संबन्धेन व्यापकतावच्छेदकं भवति । स्वाश्रयनिरूपितव्यापारत्ववत्त्व-संबन्धेन यागत्वविशिष्टस्यापूर्वस्य स्वर्गव्यापकत्वात् अपूर्वनिष्ठव्यापकतायां स्वाश्रयनिरूपितव्यापारत्ववत्त्वसंबन्धेन यागत्वमवच्छेदकं भवति ।

स्वाश्रयनिष्ठव्यापारवत्त्वेति पाठस्तु अशुद्धः । यागनिष्ठत्वस्य व्यापारे अभावात् केनापि संबन्धेन तन्निष्ठत्वोपपादनेऽपि तद्गतः स्वर्गव्यापकत्वाभावेन तेन संबन्धेन यागत्वविशिष्टस्य स्वर्गव्यापकत्वासंभवात् । इत्थञ्च अन्यतरसंबन्धघटनस्य सप्रयोजनत्वं, स्वाश्रयत्वशब्दस्य यथाश्रुतार्थकत्वं, तान्त्रिकव्यवहाराविरोधश्च निर्वहतीति सर्वं समञ्जसम् । एवं सति स्वाश्रयनिरूपितव्यापारत्ववत्त्वमिति पाठः प्रामादिकः इति लेखनमत्यन्ता-शुद्धमिति सुधीभिर्विभावनीयम् ।

एवमुत्तरत्र "अभावज्ञानं प्रतियोगितासंबन्धेन, प्रतियोगिताप्रकारकञ्चापि भवति । प्रतियोगितासंबन्धेन घटवान् घटाभावः इति प्रतियोगिता-संबन्धेनाभावज्ञानमस्ति । निरूपकत्वसंबन्धेन प्रतियोगितावानभाव इति च प्रतियोगिताप्रकारकं ज्ञानमस्ति" इत्यादर्शः । तत्र घटो नास्तीति बुद्धिः प्रतियोगितासंबन्धेन प्रतियोगिप्रकारिका अभावबुद्धिः । घटनिष्ठ-प्रतियोगिताकोऽयमभावः इति तु प्रतियोगिताप्रकारकबुद्धिः इति लेखनमुचितं बोध्यम् । एवं वह्नित्वावच्छिन्नप्रतियोगिताकाभावो हि प्रतियोगिता-प्रकारकाभाव एवेति लेखनमशुद्धम् । अभावे प्रतियोगिताप्रकारकत्वस्य बाधात् । परन्तु तस्य ज्ञानं प्रतियोगिताप्रकारकं बोध्यम् ।

**व्यापकताघटकाभावप्रतियोगितायां स्वरूपतोऽवच्छेदककोटिप्रविष्टाया अपि जातेर्व्यापकताभाने स्वर्गधर्मत्वादिना भाने न बाधकम् । स्वर्गधर्मत्वादेरुपलक्षणतया भानात् । प्रतियोगितासंबन्धेन प्रतियोगिप्रकारकज्ञाने एव प्रतियोगिकोटावुपलक्षणप्रकाराभाननियमात् । प्रकृते च कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेण भाननियमात् ।**

विवरणम्

ननु यागत्वनिष्ठव्यापकतावच्छेदकत्वात्मकाभावप्रतियोगितावच्छेदककोटौ वैजात्यं स्वरूपत एव निविशते, न स्वर्गधर्मत्वेन । स्वर्गधर्मत्वाक्रान्तगङ्गास्नानादिजन्यतावच्छेदकवैजात्यावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वाद्यागत्वस्य । यागत्वनिष्ठं निरुक्तव्याकतावच्छेदकत्वमेव लिङादिजन्यबोधे भासते इति वक्तव्यम् । लिङर्थशरीरे च स्वर्गधर्मत्वेन वैजात्यं निविष्टमिति यागत्वगतनियतपूर्ववृत्तितावच्छेदकत्वस्य बोधो न निर्वहतीत्यत आह—**व्यापकताघटकाभावेति** ।

व्यापकताभाने—शाब्दबोधात्मके ।

**उपलक्षणतयेति** । एवञ्च स्वर्गधर्मत्वोपलक्षितावच्छिन्नपूर्ववृत्तितावच्छेदकत्वमेव शाब्दधीविषय इति भावः ।

ननु नीलघटो नास्तीत्यादिप्रतीतौ नैल्यस्य प्रतियोगिकोटावुपलक्षणतया भानमनुभवविरुद्धमिति निरुक्ताभावप्रतियोगिकोटौ स्वर्गधर्मत्वस्य कथमुपलक्षणतया भानमित्यत आह— **प्रतियोगितासंबन्धेति** । नास्तीति शब्दाभिलप्या प्रतीतिः प्रतियोगितासंसर्गिका । जात्यवच्छिन्नप्रतियोगिताकोऽयमभाव इत्यादौ जातित्वोपलक्षितशुद्धघटत्वावच्छिन्नप्रतियोगिताकाभावभानात् प्रतियोगिताप्रकारकाभावबुद्धौ प्रतियोगिकोटावुपलक्षणतया भानस्य सर्वसिद्धत्वात् प्रकृतशाब्दबोधस्यापि प्रतियोगिताप्रकारकाभावबुद्धिरूपत्वादिति भावः ।

अत एव स्वरूपतो वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य संभवदुक्तिकता । इत्थमेव चेष्टतावच्छेदकधर्माणामुपलक्षणीभूतेनेष्टतावच्छेदकत्वेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोट्यप्रविष्टेनापि इष्टतावच्छेदकधर्माणां सर्वसाधारणशक्तिग्रहे भानमुपपद्यते इति ।

एतेन नियतोत्तरवृत्तितावच्छेदकधर्मवत्स्वर्गकत्वस्य विध्यर्थतामते यागादिधर्मिकतादृशकारणताग्रहस्य प्रवृत्तिहेतुता वाच्या । तदपेक्षया च स्वर्गादिधर्मिकनियतोत्तरवृत्तितावच्छेदकधर्मरूपयागादिसाध्यता-

विवरणम्

**अत एव**—प्रतियोगिताप्रकारकाभावबुद्धौ प्रतियोगिकोटावुपलक्षणतया भानसंभवादेव ।

सर्वसाधारणशक्तिग्रहे — इष्टतावच्छेदकधर्माश्रयाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वप्रतियोगिकाभाववद्धर्मवत्त्वं लिङादिपदजन्यबोधविषयत्वप्रकारकसंकेतविषयः इत्याकारके ।

वस्तुत इति कल्पारम्भे हेतुमाह—**एतेनेति** । द्वितीयकल्पावलम्बेनेत्यर्थः ।

**ज्ञानस्य प्रवृत्तिहेतुत्वे तादृशसाध्यताविशिष्टेष्टमात्रस्य[107] विध्यर्थत्वे च[108] लाघवम् । तादृशसाध्यताया निरुक्तसाधनतान्तर्गतत्वादितीष्टसाधनत्वस्य विध्यर्थत्वं प्रवर्तकत्वञ्च व्याहन्येत ।**

विवरणम्

**साध्यताविशिष्टेष्टमात्रस्येति** । प्रवृत्तिहेतुज्ञानविषयस्यैव लिङर्थत्वादिति भावः ।

प्रवर्तकत्वं—प्रवृत्तिप्रयोजकज्ञानविषयत्वम् ।

अत्र "उक्ते हेतुमाह तादृशसाध्यताया इति । तादृशसाध्यता स्वर्गादिधर्मिकनियतोत्तरवृत्तितावच्छेदकधर्मरूपयागसाध्यता हि निरुक्तसाधनतायामन्तः प्रविष्टास्ति साधनतायाः साध्यतानिरूपितत्वादिति निरुक्तसाधनतायाः प्रवृत्तिहेतुत्वे तदन्तः प्रविष्टसाध्यताया अपि प्रवृत्तिहेतुत्वं स्यादेवेति गौरवापत्तिः" (६२१ पृ.) इत्यादर्शः । एवं निरस्तमिति प्रतीकमुपादाय प्रवृत्तः "किञ्च यथा उक्ततादृशसाध्यतायाः निरुक्तसाधनतान्तर्गतत्वान्निरुक्तसाधनतायाः व्यापकताघटितकारणतायाः प्रवर्तकत्वे तदन्तः प्रविष्टसाध्यताया अपि प्रवर्तकत्वापत्त्या गौरवं प्रदर्शितम् । तथा साध्यतापि साधनतानिरूपितैव भवतीति साधनतायाः उक्तसाध्यतायामन्तःप्रवेशात

107. साध्यताविशिष्टमात्रस्य (ब. कृ.)

108. प्रवर्तकत्वे च (का.)

विवरणम्

साध्यतायाः प्रवर्तकत्वे, तदन्तःप्रविष्टसाधनताया अपि प्रवर्तकत्वं स्यादेवेति त्वन्मतेऽप्येतत्प्रदर्शितगौरवं तुल्यमेवेत्यर्थः" इत्यादर्शः ।

अत्र साधनतायाः साध्यतानिरूपितत्वमात्रेण न साध्यतायाः साधनत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वादिरूपं साधनतान्तःप्रविष्टत्वं संभवति । साधनतायाः प्रवर्तकत्वे साध्यताया अपि प्रवर्तकत्वापत्त्या गौरवमिति व्याख्यानमशुद्धम् । नियतोत्तरवृत्तितावच्छेदकधर्मवत्स्वर्गकत्वरूपसाधनताशरीरे स्वर्गनिष्ठनियतोत्तरवृत्तितावच्छेदकधर्मरूपसाध्यताया घटकत्वात् निरुक्तसाधनताज्ञानापेक्षया एतादृशसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे कारणतावच्छेदकलाघवम् । इत्थञ्च प्रवर्तकज्ञानविषयस्यैव लिङर्थत्वात् साध्यताविशिष्टेष्टस्य लिङर्थत्वापत्तिरिति भट्टाचार्याणामाशयः । तदपेक्षया साध्यताज्ञानस्य प्रवृत्तिहेतुत्वे लाघवमिति ग्रन्थपर्यालोचनया तथैव प्रतीतेः । साध्यताया अपि प्रवृत्तिहेतुत्वापत्त्या गौरवमित्यर्थः न कथमप्यनेन मूलेन लभ्यते ।

एवमुपरितनेऽपि ग्रन्थे साध्यतायाः साधनतानिरूपितत्वेन साधनतायाः साध्यतान्तःप्रविष्टत्ववर्णनं साध्यतायाः प्रवर्तकत्वे साधनताया अपि प्रवर्तकत्वापत्त्या गौरववर्णनञ्चायुक्तमेव । एतेनेत्यादिग्रन्थेन तथा गौरवस्यानुद्भावितत्वात् पूर्वग्रन्थेनासंबन्धात् । अपि च एतेनेत्यादिग्रन्थविवरणे नियतोत्तरवृत्तितावच्छेदकधर्मवत्स्वर्गकत्वं जनकतासंबन्धेन तादृशस्वर्गविशिष्टत्वमिति व्याख्यानं न युज्यते । तथा

**एवं यत्र कारणतावच्छेदकधर्मोऽप्यनुपस्थितः, अतिप्रसक्तेन न्यूनवृत्तिना वा धर्मेण कारणमुपस्थितं तत्र शब्दात् कारणता-**

विवरणम्

सति जनकतासंबन्धेन स्वर्गविशिष्टत्वस्यैव स्वर्गसाधनत्वरूपतासंभवात् नियतोत्तरवृत्तितावच्छेदकधर्मवत्त्वरूपविशेषणवैयर्थ्यापातात् । जनकतायाः निरुक्तस्वर्गकत्वरूपत्वेन तत्र जनकतानिवेशासंभवाच्च । तस्मात् सामानाधिकरण्यसंबन्धेन स्वर्गविशिष्टत्वमेव तादृशधर्मवत्स्वर्गकत्वमिति बोध्यम् ।

ननु साध्यताविशिष्टेष्टस्य लिङर्थत्वे तस्य धात्वर्थे सामानाधिकरण्यसंबन्धेन, इष्टगतसाध्यत्वस्य तदर्थत्वे च निरूपकतासंबन्धेनान्वयो वाच्यः । एवञ्च चैत्यं न वन्देतेत्यादौ धात्वर्थे चैत्यवन्दनादौ लिङर्थस्याभावान्वयबोधो न स्यात् । सामानाधिकरण्यस्य निरूपकत्वस्य च वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकतया तत्संबन्धावच्छिन्नाभावस्याप्रसिद्धेः । न हि तत्र कृतिसाध्यत्वस्य, बलवदनिष्टाननुबन्धित्वस्य वा अभावः बोधयितुं शक्यते बाधात् । तस्मादाश्रयतासंबन्धेन धात्वर्थान्वयिनः नियतोत्तरवृत्तितावच्छेदकधर्मवत्स्वर्गकत्वस्यैव लिङर्थता स्वीकार्या इत्यत आह— **एवमिति** ।

**अतिप्रसक्तेन कारणमुपस्थितमिति** । ज्वरनिवृत्तिकामः औषधं सेवेत इत्यत्र औषधसेवनत्वं न प्रकृतफलसाधनतावच्छेदकमतिप्रसक्तत्वात् । किं तु तत्तदौषधसेवनत्वम् । तच्चानुपस्थितमिति तद्घटितनिरुक्तसाधनातबोधः लिङादितो न संभवतीति समुदितार्थः ।

**ग्रहानुपपत्तिश्चेति निरस्तम् । व्यापकताघटितकारणतायाः साध्यतामपेक्ष्यागरीयस्या एवोक्तरीत्या प्रवर्तकत्वादिसंभवात् तादृशसाधनताशरीरे व्यापकतावच्छेदकत्वेनैव कारणतावच्छेदकप्रवेशात् तद्ग्रहे विशिष्य तदुपस्थित्यनुपयोगाच्चेति ।**

विवरणम्

अत्र कल्पे पूर्वकल्पोक्तप्रथमदोषाभावं दर्शयति—**व्यापकतेति** ।

द्वितीयदोषविरहं प्रदर्शयति—**तादृशसाधनताशरीरे इति** ।

एतेन, इष्टसाधनत्वं लिङर्थः उत साध्येष्टकत्वमित्यत्र विनिगमनाविरहात् विनिगमनाविरहेण सिद्धं चेदुभयमपि सिद्धमेवेति न्यायेनोभयोः लिङर्थतास्वीकारापत्त्या गौरवान्नेष्टसाधनत्वं लिङर्थः इति दूषणं परास्तं वेदितव्यम् । कारणतावच्छेदकानुपस्थितिस्थले शब्दात् स्वसाध्येष्टकत्वस्य बोधासंभवात्, इष्टसाधनत्वापेक्षया बहुव्रीह्यर्थसामानाधिकरण्यसंबन्धघटितस्य साध्येष्टकत्वस्य गुरुत्वाच्च इष्टसाधनत्वस्यैव प्रवर्तकत्वं लिङर्थत्वञ्चेति विनिगमनायाः सत्त्वात् ।

स्वर्गनिष्ठायां यागजन्यतायामवच्छेदकं स्वर्गत्वमेव । न च यागाभावेऽपि गङ्गास्नानादिना स्वर्गत्वावच्छिन्नस्योत्पत्त्या व्यभिचारः शङ्कनीयः । विजातीयस्वर्गनिरूपितसमवायस्यैव कार्यतावच्छेदकसंबन्धत्वात् । तेन संबन्धेन स्वर्गत्वावच्छिन्नविशिष्टाधिकरणवृत्त्यभावा-

**केचित्तु**[109] **विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसंबन्धः । तथा च वैजात्यस्य संबन्धघटकतयैव व्यापकताशरीरे निवेशान्नोपस्थित्यपेक्षा न वा कारणताविघटकव्यभिचारावकाशः इत्याहुः ।**

**तदसत्—विजातीयस्वर्गनिरूपितसमवायत्वेन संबन्धतायां मानाभावात् । तादृशसंबन्धघटितव्यापकताया विधिप्रत्ययार्थत्वे तस्य स्वर्गादिनिष्ठवैजात्यभेदेन शक्तिबाहुल्यप्रसङ्गात् । तादृशकार्यसंबन्धघटितेष्टकारणतायाश्च प्रामाणान्तरेणाप्रत्यायितत्वात्तत्र शक्ति-**

विवरणम्

प्रतियोगित्वरूपव्यापकत्वमेव लिङा बोध्यते । स्वर्गगतवैजात्यस्य स्वर्गत्वावच्छिन्नस्याधिकरणांशे संसर्गतयैव भानात् शाब्दबोधात्पूर्वं वैजात्यस्योपस्थितिर्नापेक्ष्यते विशिष्टबुद्धौ विशेषणज्ञानस्यैव हेतुत्वादिति वादिनां मतं दूषयितुमनुवदति **केचित्त्विति** ।

तस्य — विधिप्रत्ययस्य । शक्तिबाहुल्यप्रसङ्गादित्यनेनान्वेति ।

**प्रमाणान्तरेणाप्रत्यायितत्वादिति** । यजेत स्वर्गकामः इति वाक्याधीनस्वर्गसाधनताबोधानन्तरं व्यभिचारोपस्थित्या तत्परिहारेण विजातीयस्वर्गनिरूपितसमवायसंबन्धघटितसाधनता ज्ञायते । लिङादिपदशक्तिग्रहात्पूर्वं तद्ज्ञानं न जायते इति भावः ।

तत्र — तादृशसंबन्धघटितव्यापकतारूपेष्टसाधनत्वे ।

109. केचित्तु नास्ति (ब. कृ.)

ग्रहानुपपत्त्या शाब्दबुद्धौ तद्भानानुपपत्तेश्च ।

न चेष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकरणादिपदार्थे च खण्डशः शक्तिरूपेया । आकांक्षावशाच्चाधिकरणरूपविध्यर्थे विजातीयस्वर्गनिरूपितसमवायस्य संबन्धतया भानात् तादृशकार्यसंबन्धघटितकारणतायाः शाब्दबोधे भानमुपगन्तव्यम् । न तु तादृशसंबन्धान्तर्भावेण शक्तिरिति न काचिदनुपपत्तिरिति वाच्यम् । एवं[110] सत्यपि संसर्गतात्पर्यज्ञानानुरोधेन

विवरणम्

**शाब्दबुद्धौ तद्भानानुपपत्तेश्चेति** । तद्विषयकशाब्दबोधे पदजन्यतदुपस्थितेर्हेतुत्वात् शक्तिसंबन्धेन पदसंबन्धितया ज्ञातस्यैवार्थस्य पदज्ञानेनोपस्थितेः प्रमाणान्तरेणावगत एव पदसंबन्धज्ञानसंभवाच्चेति भावः ।

**न काचिदनुपपत्तिरिति** । स्वर्गगतवैजात्यभेदेन लिङः शक्तिबाहुल्यं शक्तिग्रहानुपपत्तिश्चेत्यनुपपत्तिर्नास्तीत्यर्थः ।

**संसर्गतात्पर्यज्ञानानुरोधेनेति** । विशिष्टबुद्धौ विशेषणज्ञानस्यैव हेतुत्वात् वैजात्यस्य शाब्दबोधे प्रकारतया भानाभावान्न शाब्दबोधे साक्षाद्धेतुत्वं तदुपस्थितेः । अपि तु शाब्दकारणतात्पर्यज्ञाने तस्याः हेतुत्वमस्ति तत्र वैजात्यस्य प्रकारतया भानात् । इत्थञ्च वैजात्योपस्थितिं विना तत्संसर्गकशाब्दबोधो न संभवति । तदिदमुक्तं संसर्गोपस्थित्यपेक्षाया इति ।

110. एवं सति (ब. कृ.)

**तादृशसंसर्गोपस्थित्यपेक्षाया दुर्वारत्वात् । न च तत्संसर्गेण विशेषणविशिष्टविशेष्यपरत्वज्ञानमेव संसर्गभाननियामकम् । तत्रापि संसर्गः संसर्ग एव न तु विशेषणमिति न ज्ञानापेक्षेति वाच्यम् । विशेषणविशिष्टविशेष्यस्य वाक्यार्थत्वेन पूर्वमनिश्चिततया तत्परत्वग्रहस्य शाब्दबोधात्पूर्वमसंभवात् । तत्तत्संबन्धविषयतानिरूपितविशेषणादि-विषयताशालिबोधपरत्वज्ञानस्यैव हेतुतया तत्र संबन्धस्य विशेषणतया तदुपस्थितेरावश्यकत्वात् ।**

**एवं विजातीयस्वर्गनिरूपितसमवायसंबन्धेन स्वर्गत्वावच्छेदेन जन्यतोपगमे 'स्वर्गत्वस्य अश्वमेधजन्यत्वसामानाधिकरण्यमात्रमेव हि शब्देनापि प्रतीयते न तु स्वर्गत्वस्य जन्यतावच्छेदकत्वमसामर्थ्याद-संभवाच्च' इत्यादिमिश्रग्रन्थविरोधः ।**

विवरणम्

**तत्रापि संसर्गः संसर्ग एवेति ।** संसर्गः — शाब्दबोधीय-सांसर्गिकविषयताश्रयः । तत्रापि — तात्पर्यज्ञानेऽपि । संसर्ग एव — सांसर्गिकविषयतावानेव न प्रकारतावानित्यर्थः ।

तत्र — निरुक्ततात्पर्यज्ञाने ।

संबन्धस्य — शाब्दबोधीयसांसर्गिकविषयतावतः ।

विशेषणतया — प्रकारतया ।

ननु स्वविषयतानिरूपितविशेष्यतानिरूपकत्वसंबन्धेन विशेषण-विशिष्टो यो बोधः तदिच्छयोच्चरितत्वरूपतात्पर्यज्ञानं शाब्दबोधहेतुः स्वीक्रियते । तत्र च तात्पर्यज्ञाने संसर्गः संसर्गतयैव भासते इति न तदुपस्थित्यपेक्षेत्यत आह—**एवमिति** ।

**यत्तु वैजात्यमेव कार्यतावच्छेदकं तच्च संबन्धविधयैव कारणताघटकम् । कार्यतावच्छेदकधर्मविशिष्टनिरूपितकार्यतावच्छेदकसंबन्धेन कार्यवन्निष्ठाभावाप्रतियोगित्वस्य कारणताशरीरे निवेश्यत्वादिति ।**

**तदप्यसत् — कार्यस्य कार्यतावच्छेदकरूपेणैव निवेशनीयतया तदुपस्थित्यपेक्षाध्रौव्यात् । न च संबन्धसंकोचे प्रमेयत्वेनैव कार्यप्रवेशः संभवतीति वाच्यम् । विजातीयस्वर्गवन्निष्ठाभावप्रति-**

विवरणम्

**यत्त्विति** । अत्र मते न स्वर्गत्वं यागजन्यतावच्छेदकमिति न मिश्रग्रन्थविरोधः । कार्यतावच्छेदकसंबन्धोऽपि शुद्धसमवाय एव । वैजात्यविशिष्टनिरूपितसमवायेन स्वर्गवन्निष्ठाभावाप्रतियोगित्वस्य प्रमाणान्तरावेद्यतया तत्र शक्तिग्रहानुपपत्तिरपि पूर्वकल्पे इव खण्डशक्तिस्वीकारेणैव परिहरणीया । निरुक्तसंबन्धेन विशेषणविशिष्टबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य शाब्दबोधहेतुत्वस्वीकारान्न तात्पर्यज्ञानात्पूर्वं वैजात्योपस्थितेरपेक्षा इति बोध्यम् ।

तदुपस्थित्यपेक्षाध्रौव्यात्—वैजात्योपस्थित्यपेक्षानैयत्यात् । वैजात्यस्य कार्यांशे प्रकारतया भानादिति भावः ।

**प्रमेयत्वेनैव कार्यप्रवेश इति** । वैजात्यविशिष्टनिरूपितसमवायस्य विजातीयस्वर्गान्यप्रमेयं प्रति संबन्धत्वासंभवादेव तद्भिन्नप्रमेयमादाय दोषाप्रसक्तेरिति भावः ।

**योगितात्वस्यागुरोरवच्छेदकत्वसंभवे विजातीयस्वर्गीयसमवायसंबन्धेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वरूपगुरुधर्मावच्छिन्नाभावाप्रसिद्धेः ।**

विवरणम्

**गुरुधर्मावच्छिन्नाभावाप्रसिद्धेरिति** । न च लिङः प्रमेयं अधिकरणं अभावः प्रतियोगित्वमभावश्च खण्डशोऽर्थः । व्युत्पत्तिवैचित्र्यात् प्रमेयस्य विजातीयस्वर्गीयसमवायेनाधिकरणेऽन्वयः । अधिकरणान्विताभावान्वितप्रतियोगित्वस्य, विजातीयस्वर्गीयसमवायेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयः । संबन्धघटकं व्यापकतावच्छेदकं रूपं विजातीयस्वर्गसमानाधिकरणाभावप्रतियोगितात्वमिति तदवच्छिन्नप्रतियोगिताकाभावशाब्दबोधस्वीकारे न दोष इति वाच्यम् । गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे तादृशप्रतियोगितात्वावच्छिन्नव्यापकताघटकाभावप्रतियोगिता अपि विशिष्य तत्तद्व्यक्तित्वेनैव निवेशनीयाः । अन्यथा विजातीयस्वर्गवन्निष्ठाभावप्रतियोगितात्वावच्छिन्नवन्निष्ठाभावप्रतियोगितात्वापेक्षया गुरोः विजातीयस्वर्गीयसमवायेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वावच्छिन्नवन्निष्ठाभावप्रतियोगितात्वस्याभावप्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेः तादृशाभावनिवेशासंभवात् । एवञ्च विशिष्य तत्तत्प्रतियोगिताव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटघटितव्यापकत्वस्यासर्वज्ञदुर्ज्ञेयत्वात् तादृशपारिभाषिकावच्छिन्नत्वविशिष्टप्रतियोगिताकाभावशाब्दबोधासंभवात् ।

**एतेन स्वर्गत्वमेव यागजन्यतावच्छेदकम् । अवच्छेदकताघटक-समवायसंबन्धसंकोचेन[111] न व्यभिचारः इत्यपि निरस्तम् ।**

**तादृशसंबन्धविशेषणेष्टतावच्छेदकविशिष्टस्य प्रमाणान्तरा-वेद्यतया तत्र शक्तिनिश्चयासंभवात् ।**

**न हि समभिव्याहृतफलबोधकपदोपस्थाप्यतावच्छेदकत्वरूपो-पलक्षणधर्मेण यथा स्वर्गत्वादीनां शक्तिग्रहे भानम् । तथोपलक्षणी-भूततादृशपदोपस्थाप्यतावच्छेदकसंबन्धत्वेन विजातीयस्वर्गनिष्ठ-**

विवरणम्

एतेन — वक्ष्यमाणदूषणेन ।

अत्र मते स्वर्गत्वमेव यागकार्यतावच्छेदकम् । कार्यतावच्छेदकः संबन्धोऽपि शुद्धसमवायः । विजातीयस्वर्गानुयोगिकत्वविशिष्टसमवायः कार्यतावच्छेदकतावच्छेदकसंबन्धः इति बोध्यम् ।

ननु समभिव्याहृतफलबोधकपदोपस्थाप्यतावच्छेदकसंबन्धेन तादृश-पदोपस्थाप्यतावच्छेदकविशिष्टसाधनत्वं लिङादिपदजन्यबोधविषयत्वप्रकारक-संकेतविषयः इति शक्तिग्रहे उपलक्षणीभूतेन निरुक्तसंबन्धत्वेन विशिष्ट-समवायस्य भानं संभवत्येवेत्यत आह — **न हीति** । भानसंभव इत्यनेनान्वयः ।

111. संकोचे (ब. कृ.)

**समवायादेरपि तत्र भानसंभवः । स्वर्गपदाच्छुद्धसमवायेनैव स्वर्गत्वविशिष्टस्योपस्थितेः[112] । विशिष्टसमवायेन स्वर्गत्वविशिष्टस्य स्वर्गपदार्थत्वोपगमे लक्षणाप्रसङ्गात् । शुद्धसमवायेन स्वर्गत्वविशिष्टविषयककामनावतोऽनधिकारप्रसङ्गात् ।**

विवरणम्

तत्र—शक्तिग्रहे ।

**शुद्धसमवायेनैव स्वर्गत्वविशिष्टस्योपस्थितेरिति ।** स्वर्गपदस्य शुद्धसमवायेन स्वर्गत्वविशिष्टे एव शक्तत्वादिति भावः ।

विशिष्टसमवायेन — विजातीयस्वर्गानुयोगिकत्वविशिष्टसमवायेन ।

दूषणान्तरमाह—**शुद्धसमवायेनेति ।**

**अनधिकारप्रसङ्गादिति ।** समभिव्याहृतफलबोधकपदेन यादृशं विशिष्टमुपस्थितं तादृशविशिष्टफलकामनाया एवाधिकारत्वादिति भावः ।

अत्र "विशिष्टेति, यदि विशिष्टसमवायेनोक्तेन स्वर्गत्वविशिष्टे स्वर्गपदस्य शक्तिः स्यात् तदा शुद्धसमवायेन स्वर्गत्वविशिष्टे स्वर्गपदस्य लक्षणैव प्रसज्येत । न चैतदिष्टमित्यर्थः" (६२६ पृ.) इत्यादर्शः । अत्र पूर्वं शुद्धसमवायेन स्वर्गत्वविशिष्टस्यैव स्वर्गपदादुपस्थितेरित्युक्तम् । ततः स्वर्गकाम इत्यत्र स्वर्गपदेन विजातीयसमवायेन

112. उपस्थितौ (ब.)

**मीमांसकास्तु — अहरहः सन्ध्यामुपासीत इत्यादौ नित्यतया निष्फले सन्ध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्ट-साधनत्वं लिङर्थः ।**

विवरणम्

स्वर्गत्वविशिष्टमेव बोध्यते इत्यभ्युपगमे शुद्धसमवायेन स्वर्गत्वविशिष्ट-वाचकस्वर्गपदस्य तत्र लक्षणा स्यादिति दोषः अनेन ग्रन्थेन भट्टाचार्यै-रुद्भावितः । स्वर्गपदार्थत्वोपगमे इत्यस्य स्वर्गपदबोध्यत्वोपगमे इत्यर्थः । स्वर्गपदार्थत्वशब्दस्य स्वर्गपदवाच्यत्वार्थकतामभिप्रेत्यादर्शः प्रवृत्तः । तत्र च लक्षणाप्रसङ्गादित्यस्य शुद्धसमवायेन स्वर्गत्वविशिष्टे इति पूरयित्वा व्याख्यानमिति विवेचयन्तु सुधियः ।

नित्यकर्मणा निष्फलत्वं स्वीकृत्य, तेषु इष्टसाधनताज्ञानाघटितया सन्ध्यावन्दनाद्यभावगोचरद्वेषघटितसामग्र्या प्रवृत्तिमुपपादयतां कृतिसाध्यत्व-मात्रस्य लिङर्थत्वं ब्रुवता मीमांसकानां मतं निरूपयति—**मीमांसकास्त्विति ।** आहुरिति व्यवहितेन संबन्धः ।

**नित्यतया निष्फले इति ।** सन्ध्योपासनादेः सफलत्वे काम्यत्वात्तद्विरुद्धं नित्यत्वं सर्वानुमतं न स्यादिति भावः ।

अत्र "नित्यकर्मविधायकवाक्यघटकलिङः इष्टसाधनत्वार्थकत्वा-संभवान्नेष्टसाधनत्वं लिङर्थः । किं तु प्रवर्तकत्वमेव । तच्च सर्वत्रैव लिङोऽर्थः संभवतीत्यर्थः" (६२६ पृ.) इत्यादर्शः । मूलोपदर्शितमीमांसकमते प्रवर्तकत्वं न लिङर्थः । किं तु कृतिसाध्यत्वमेव । अत एवैतन्मत-निरूपणावसाने इष्टसाधनत्वस्य लिङर्थत्वाभावे, यजेत स्वर्गकामः इति वाक्यात्कथं प्रवृत्तिरित्याशङ्क्य स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया इष्टसाधनत्वं पदानुपस्थितमपि शाब्दबोधे भासते इति समाहितं भट्टाचार्यैः । प्रवर्तकत्वं लिङर्थ इति नोक्तमिति बोध्यम् ।

**अथ सन्ध्यावन्दनादेरपि अर्थवादोपस्थापितब्रह्मलोकावाप्त्यादि-फलसाधनत्वमव्याहतम् । यत्र नित्येऽर्थवादादपि न फलोपस्थितिः तत्रापि फलाभावनिश्चायकप्रमाणाभावात् योग्यतासंशयसंभवेन फलसाधनत्वप्रत्ययः लिङादितः संभवत्येव । न च तद्बोधो नोपयोगी । निष्फलतया ज्ञाते चैत्यवन्दनादौ प्रवृत्तिवारणायेष्ट-साधनताज्ञानस्य प्रवृत्तिहेतुतावश्यकत्वेन नित्यविधेः प्रवृत्तिनिर्वाहाय तस्य फलसाधनताबोधकताया आवश्यकत्वादिति चेत् ।**

विवरणम्

नैयायिकः शङ्कते—**अथेति ।**

**अर्थवादोपस्थापितेति** । 'सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥' इत्यर्थवादोपस्थापितेत्यर्थः ।

**योग्यतासंशयसंभवेनेति ।** संशयनिश्चयसाधारणयोग्यताज्ञानस्यैव शाब्दबोधहेतुत्वादिति भावः ।

**संभवत्येवेति ।** सामान्यतः इष्टत्वेनेष्टसाधनत्वं लिङर्थः इत्याशयेनेदम् । नित्यविधेरिति पञ्चम्यन्तम् ।

अत्र "ननु फलयोग्यतासंशयेन जायमानस्तादृशनित्ये लिङादितः फलसाधनत्वबोधः निरुपयोग एव स्यात् । निश्चयात्मकबोधस्यैवोपयोगित्वादित्याशङ्क्याह — **न चेति** " (६२७-पृ॰) इत्यादर्शः । संशयात्मकः शाब्दबोधो नास्ति । शाब्दबोधे योग्यताज्ञानस्य संशयनिश्चयसाधारण-ज्ञानत्वेन कारणता । तेनेष्टसाधनतासंशयरूपयोग्यताज्ञानजन्यः शाब्दबोधः निश्चयरूप एवेत्येवमवतरणं न संगच्छते । अपि चैवमवतरणिकादाने उत्तरग्रन्थेन कथमस्याः शङ्कायाः परिहारो लभ्यते इति विभावनीयम् ।

न — 'सन्ध्यामुपासते ये च सततं संशितव्रताः' इति श्रुतौ सततमिति श्रुतेः, कदाचिद्यस्य सन्ध्यावन्दनादिबाधः तेन स्वीयसन्ध्यावन्दने ब्रह्मलोकावाप्तिफलानुपधानस्य निश्चिततया अहरहः सन्ध्यावन्दने ब्रह्मलोकावाप्तिसाधनताबोधनेऽपि तस्य सन्ध्यावन्दने प्रवृत्त्यनिर्वाहात् । यत्र च नित्ये विशिष्य फलबोधकोऽर्थवादादिर्नास्ति तत्र विधिप्रत्ययेन इष्टत्वेन फलसाधनताबोधस्य जननेऽपि

विवरणम्

अर्थवादेन विशिष्य फलोपस्थितिस्थले विशिष्य ब्रह्मलोकावाप्तिसाधनत्वस्य, फलविशेषानुपस्थितिस्थले च सामान्यतः इष्टसाधनत्वस्य च बोधः न प्रवृत्तिनिर्वाहक इति नित्यकर्मणि इष्टसाधनताज्ञानाघटितायाः अन्यादृश्या एव सामग्र्याः प्रवर्तकत्वात् इष्टसाधनताबोधः अनुपयोगीति इष्टसाधनत्वस्य लिङर्थतां दूषयति — **नेति** ।

सततमिति श्रुतेः — सततमित्यस्य श्रूयमाणत्वात् ।

**निश्चिततयेति** । ब्रह्मलोकावाप्तिसाधनतावच्छेदकाविच्छिन्नत्वस्य स्वीयसन्ध्यावन्दने अभावनिश्चयादिति भावः ।

**प्रवृत्त्यनिर्वाहादिति** । तथा च तत्रेष्टसाधनताबोधनं व्यर्थमिति भावः ।

विशिष्य फलोपस्थितिशून्यस्थलेऽपि इष्टसाधनताबोधस्यानुपयोगित्वमाह — **यत्रेति** ।

**इष्टत्वेनेति** । तृतीयार्थो वैशिष्ट्यम् । फलेऽन्वेति ।

**इच्छाविषयतावच्छेदकस्वर्गत्वादिरूपविशेषधर्मपुरस्कारेण फलविषयकतत्साधनताबोधस्यानिर्वाहेण प्रवृत्त्यनिर्वाहात् इष्टसाधनताज्ञानाघटितकारणस्तोमात्मिकायाः सन्ध्यावन्दनाद्यभावगोचरनरकादिसाधनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्या एव सन्ध्यावन्दनादौ प्रवर्तकताया उपगन्तव्यतया नित्यस्थले इष्टसाधनताबोधस्यानुपयोगिताया दुर्वारत्वात् ।**

विवरणम्

**अनिर्वाहादिति ।** सामान्यतः इष्टत्वेन इष्टसाधनताज्ञानस्य प्रवृत्तावप्रयोजकत्वादिति भावः ।

ननु नित्यविधेः प्रवर्तकत्वनिर्वाहाय इष्टसाधनताबोधकत्वमावश्यकमित्युक्तं तत्राह — **इष्टसाधनतेति ।**

अत्र "सन्ध्यावन्दनाभावे नरको भवतीत्याकारकं यत् सन्ध्यावन्दनाद्यभावगोचरनरकादिसाधनताज्ञानं, तादृशज्ञानाधीननरकादिगोचरो यो द्वेषः तद्घटिताया एव सामग्र्याः सन्ध्यावन्दनादौ प्रवर्तकत्वं स्वीकार्यम् . . . . . नरकादौ द्वेषे सत्येव नरककारणीभूतस्य सन्ध्यावन्दनाभावस्य परिवर्जनाय सन्ध्यावन्दनादौ प्रवृत्तिरिति प्रवर्तकसामग्र्याः नरकादिद्वेषघटितत्वमुक्तम्" (६२७-पृ.) इत्यादर्शः । न हि नरके दुःखविशेषे द्वेषः सन्ध्यावन्दनाभावे नरकसाधनताज्ञानमपेक्षते । दुःखज्ञानादेव तत्र द्वेषोदयात् । दुःखसाधनादावेव द्वेषं प्रति द्विष्टसाधनताज्ञानस्य हेतुत्वात् । अपि च सन्ध्यावन्दनाभावे नरकसाधनताज्ञानात् कथं नरके द्वेषो जायेत । तस्मात् यत्र द्विष्टसाधनताज्ञानं तत्रैव द्वेषोदयात् सन्ध्यावन्दनाभावे नरकसाधनताज्ञानात् तत्रैव द्वेष उदेति । तद्गोचरद्वेषेतिपदेनापि सन्ध्यावन्दनाभावगोचरद्वेष एव स्वरसतः प्रतीयते इति बोध्यम् ।

**न च विश्वजिता यजेतेत्यत्र विशिष्टफलाश्रवणेऽपि यथा स्वर्गकामपदस्याध्याहारेण तत्समभिव्याहारात् विशेषरूपावच्छिन्न-स्वर्गसाधनताबोधः, तथा नित्यस्थलेऽपि विशेषधर्मप्रकारकस्वर्गसाध-नता[113]बोधसंभवादुक्तप्रवृत्तिसामग्र्यन्तरकल्पनमयुक्तमिति वाच्यम् । बहुवित्तव्ययायाससाध्यविश्वजिद्यागे[114] तत्तद्ग्रामपश्वादिफलोद्देशेन**

विवरणम्

विश्वजिन्न्यायेन नित्यकर्मणां स्वर्गफलकत्वं स्वीकृत्य शङ्कते — **न चेति** ।

**विशेषरूपेति** । स्वर्गत्वेत्यर्थः ।

**नित्यस्थलेऽपीति** । स्वर्गकामपदस्याध्याहारेणेति शेषः ।

**सामग्र्यन्तरेति** । सन्ध्यावन्दनाभावे द्वेषघटितसामग्रीत्यर्थः ।

नित्यविधिस्थले विश्वजिन्न्यायस्याप्रवृत्तिमाह — **बहुवित्तव्ययेति** । बहुवित्तव्ययेन बह्वायासेन च साध्येत्यर्थः । सन्ध्यावन्दनादौ चेति यत्रार्थवादादपि फलोपस्थितिर्नास्ति तादृशनित्यकर्माभिप्रायकम् । अथवा पूर्वं सन्ध्योपासनादौ ब्रह्मलोकावाप्तिसाधनताबोधस्य प्रवृत्त्यनुपयोगितायाः अभिधानात् यथाश्रुताभिप्रायकमेवेति बोध्यम् ।

113. स्वर्गसाधनबोध (ब. कृ.)

114. विश्वजिद्यागेन (ब. कृ.)

**प्रवृत्त्यनुपपत्तेस्तद्विधेः स्वर्गफलतात्पर्यनिश्चयात् । सन्ध्यावन्दनादौ चाल्पायाससाध्ये ग्रामादिफलोद्देशेनापि प्रवृत्त्युपपत्तेः तद्विधेः स्वर्गपरत्वनिश्चयायोगात् । स्वर्गादिफलकामनारहितैर्मुमुक्षुभिरपि सन्ध्यावन्दनाद्याचरणात् उक्तप्रवृत्तिसामग्रीकल्पनस्यावश्यकत्वाच्च । तादृशसामग्रीं विना प्रायश्चित्तादाविष्टासाधने प्रवृत्त्यनिर्वाहाच्च ।**

**न च तत्रापि पापध्वंसरूपेष्टसाधनताज्ञानात्[115] प्रवृत्तिर्निर्वहति । सुखदुःखाभावेतरगोचरेच्छायामिष्टसाधनताज्ञानस्य नियमतोऽपेक्षायां**

विवरणम्

**स्वर्गपरत्वनिश्चयेति ।** स्वर्गसाधनताबोधेच्छयोच्चरितत्वनिश्चये-त्यर्थः ।

नित्यविधिस्थले विश्वजिन्न्यायाप्रवृत्तिमुपपाद्य, स्वर्गसाधनताबोधे बाधकमप्याह — **स्वर्गादिफलकामनारहितैरपीति ।** सन्ध्योपासनादेः स्वर्गफलकत्वे, तत्तत्फलजनककर्मणि तत्तत्फलकामनाया एवाधिकारत्वात् मुमुक्षूणामधिकाराभावप्रसङ्ग इति भावः ।

नित्यकर्मसु इष्टसाधनताज्ञानघटितसामग्र्याः प्रवर्तकत्वं न संभवतीति प्रतिपाद्य, इष्टसाधनताज्ञानाघटितसामग्र्यां प्रवर्तकत्वस्य नित्यादन्यत्र क्लृप्तत्वमाह — **तादृशसामग्रीं विनेति ।**

प्रायश्चित्तं नैमित्तिकम् । प्रायश्चित्तेन पापनाशात् तादृशफलसाधनता-ज्ञानस्यैव तत्रापि प्रवर्तकत्वं शङ्कते — **न चेति** । निर्वहतीत्यनेन संबन्धः ।

115. पापध्वंसेष्टसाधनज्ञानात् (ब. कृ.)

**निष्फलपापध्वंसस्येष्टत्वासंभवात् । नरकसाधनगोचरद्वेषस्य तद्ध्वंसगोचरेच्छाजनकत्वोपगमेऽस्मत्समीहितायामिष्टसाधनत्वाघटितप्रवृत्तिसामग्र्यामविवादात् । कृतिसाध्यताज्ञानसहितेच्छासामान्यसामग्रीतः चिकीर्षोत्पत्तेर्निष्फलेऽपि सन्ध्यावन्दनादौ निर्वाहेण प्रवृत्त्युपपत्तेः ।**

**न च नरकानुत्पाद एव प्रायश्चित्तस्य सन्ध्यावन्दनादेश्च फलमिति इष्टसाधनताज्ञानघटितैव प्रवृत्तिसामग्री । नरकद्वेषवतां च तद्-**

विवरणम्

**निष्फलपापध्वंसस्येति** । सुखदुःखाभावान्यस्मिन् पापध्वंसे विनेष्टसाधनताज्ञानं नेच्छा । तत्र निष्फलत्वान्नेष्टसाधनताज्ञानं संभवतीति पापध्वंसे इच्छैव न स्यात् । तथा च कथं प्रायश्चित्ते इष्टसाधनताज्ञानात्प्रवृत्तिरिति भावः ।

ननु सुखदुःखाभावेतरगोचरेच्छायां नियमेनेष्टसाधनताज्ञानापेक्षां नाङ्गीकुर्मः । दुःखविशेषरूपस्य नरकस्य स्वभावतः द्विष्टत्वात् तत्साधने पापे द्विष्टसाधनताज्ञानाधीनः द्वेषः पापध्वंसे इच्छां जनयतीति पापध्वंसस्येष्टत्वं संभवतीत्यत आह — **नरकसाधनगोचरद्वेषस्येति** । चिकीर्षोत्पत्तेरित्यस्य निर्वाहेणेत्युत्तरेणान्वयः ।

**नरकानुत्पादः** — नरकप्रागभावः । नरकस्य सुखासंभिन्नदुःखविशेषरूपत्वात्तदभावे विनापीष्टसाधनताज्ञानं तद्ज्ञानमात्रादेवेच्छा संभवतीति भावः ।

**नरकद्वेषवतामिति** । मुमुक्षूणामपि नरके द्वेषोऽस्तीति तेषामपि नरकानुत्पादेच्छारूपाधिकारः संभवतीति भावः ।

नुत्पादे नियमत एवेच्छेति तेषां नित्यसन्ध्यावन्दनाद्यनुष्ठानमुपपद्यते । अन्यैश्च [116]तन्नानुष्ठीयते इति वाच्यम् । नरकानुत्पादस्य तत्प्रागभावात्मकस्य प्रतियोगिविकल्पग्रासेन फलत्वासंभवात् ।

अत्यन्ताभावस्य प्रतियोगिविरोधितया कदाचित् पापान्तरेण

विवरणम्

अन्यैः — नरकद्वेषरहितैः ।

**प्रतियोगिविकल्पग्रासेनेति** । यस्योत्पत्तिः अवश्यभाविनी तस्यैव प्रागभावः नान्यस्याकाशादेः प्रमाणाभावात् । इत्थञ्च सन्ध्योपासकस्य नरकदुःखं यद्युत्पत्स्यते तदैव तत्प्रागभावः फलं सिद्धयति । तथा च कृतेऽपि सन्ध्योपासने नरकोत्पत्तिरावश्यकीति तदनुष्ठानं व्यर्थम् । यदि च नोत्पत्स्यते तदा तस्य प्रागभावे मानाभावात् नरकप्रागभावस्य फलत्वं न निर्वहतीति भावः ।

ननु तर्हि नरकात्यन्ताभाव एव फलमस्तु इत्यत आह — **अत्यन्ताभावस्येति** ।

**प्रतियोगिविरोधितयेति** । अत्यन्ताभावस्य तत्तत्प्रागभावतद्ध्वंसत्रितयप्रतियोगिकत्वेन नरकात्यन्ताभावस्य नरकध्वंसप्रागभावप्रतियोगिकत्वात् अभावविरोधिनः प्रतियोगिनः नरकध्वंसस्य नरकप्रागभावस्य चाधिकरणे आत्मनि नरकात्यन्ताभावः न संभवतीति भावः ।

116. तत्रानुष्ठीयते (ब. कृ)

**यस्य नरकदुःखं जनितं जनिष्यते वा तदात्मन्यसत्त्वात् । नित्यत्वेन चोभयोः फलत्वासंभवात् । योगक्षेमसाधारणसाधनतायाश्च गुरुशरीरत्वेन प्रवृत्त्यनुपयोगित्वात् ।**

**यदपि मण्डलीं कुर्यादित्यादिवाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमिति ।**

विवरणम्

ननु ध्वंसप्रागभावयोः अत्यन्ताभावेन विरोधस्याप्रामाणिकतायाः शिरोमणिभिः प्रतिपादनात् नव्यमते नरकध्वंसादिमत्यपि नरकात्यन्ताभावः संभवतीत्यत आह — **नित्यत्वेनेति** ।

उभयोः — प्रागभावात्यन्ताभावयोः ।

फलत्वासंभवात् — जन्यत्वासंभवात् ।

ननु सन्ध्योपासनायाः पूर्वमपि सतः नरकात्यन्ताभावस्य परिपालकतारूपसाधनत्वं सन्ध्योपासनायामस्तीत्यत आह — **क्षेमसाधारणेति** ।

प्रवृत्त्यनुपयोगित्वात्—प्रवृत्तिकारणतावच्छेदकविषयताकत्वाभावात् ।

नित्यविधिस्थले इष्टसाधनत्वबोधासंभवेन इष्टसाधनत्वस्य लिङर्थतां दूषयित्वा, तस्य लिङर्थत्वे नैयायिकोक्तां युक्तिं दूषयितुं तन्मतमुपन्यस्यति — **यदपीति** ।

**आवश्यकमिति** । कृतिसाध्यत्ववति मण्डलीकरणे बाधितस्य इष्टसाधनत्वस्य बोधकतयैव तद्वाक्याप्रामाण्यं संपादनीयमिति भावः ।

तदपि न — मण्डलीकरणादिजन्यतद्ध्वंसादिरूपफलेऽपि कदाचित् कस्य [117]चिदिष्टसाधनताभ्रमेणेच्छोत्पत्त्या मण्डलीकरणादावपि इष्टसाधनत्वाबाधेनेष्टसाधनत्वविध्यर्थतामतेऽपि तद्वाक्यप्रामाण्यस्यावश्यकतयेष्टापत्तेः । स्वर्गकामो मण्डलीं कुर्यादिति वाक्यजन्यबोधे

विवरणम्

**इष्टसाधनताभ्रमेणेति ।** मण्डलीकरणध्वंसस्य सुखदुःखाभावेतरतया विना इष्टसाधनताज्ञानं तत्रेच्छानुत्पत्तेरिति भावः ।

अत्र " मण्डलीकरणजन्यं यत्पापध्वंसरूपफलं तत्रापि कस्य चिदिष्टताभ्रमेणेच्छा स्यात् । तदा तज्जनकमण्डलीकरणादौ इष्टसाधनत्वमबाधितं स्यादेवेति " (६३० पृ॰) इत्यादर्शः ।

अत्र मण्डलीकरणादिजन्यतद्ध्वंसेत्यत्र कथं तच्छब्देन पापस्य परामर्शः तस्याप्रकृतत्वात् । किञ्च मण्डलीकरणेन यदि वस्तुतः पापध्वंसो जायेत तदैव इच्छाविषयपापध्वंसजनकत्वस्याबाधितत्वात् मण्डलीं कुर्यादिति वाक्यस्य प्रामाण्यमापादयितुं शक्यते । तदेव न, मण्डलीकरणे पापध्वंसजनकत्वसत्त्वे मानाभावात् । अपि च पापध्वंसे इष्टताभ्रमेणेच्छा इति व्याख्यानमशुद्धम् । निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ इत्युक्तेः पापध्वंसे इच्छा इष्टसाधनताज्ञानादेव जायेत । न त्विष्टत्वज्ञानात् । तस्य तत्राहेतुत्वात् । पापध्वंसे इच्छाविषयत्वरूपेष्टत्वस्य सत्त्वात्कथं तज्ज्ञानस्य भ्रमत्वम् । तस्मात्

117. इष्टताभ्रमेण (का. आ.)

**च स्वर्गकामनाया मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वभानेन तदर्थबाधेन तद्वाक्याप्रामाण्योपपत्तेः ।**

विवरणम्

इष्टसाधनताभ्रमेणेति समीचीनः पाठः । तद्ध्वंसेत्यत्र तच्छब्देन मण्डलीकरणं परामृश्यते । ध्वंसं प्रति प्रतियोगिनः कारणत्वात् मण्डलीकरणध्वंसजनकत्वं तत्राबाधितम् । तादृशध्वंसे इष्टसाधनताभ्रमात् यदि कस्यचिदिच्छा तदा इष्ट (मण्डलीकरणध्वंस) साधनत्वस्य मण्डलीकरणे अबाधितत्वात् मण्डलीं कुर्यादिति वाक्यस्य प्रामाण्यापत्तिरित्यर्थः । इत्थञ्च इष्टसाधनताभ्रमेणेत्यत्र भ्रमपदमपि साधु संगच्छते ।

ननु स्वर्गकामो मण्डलीं कुर्यादिति वाक्यस्य प्रामाण्यवारणायैव इष्टसाधनत्वस्य लिङर्थतास्वीकार आवश्यकः । न च तत्र मण्डलीकरणध्वंसरूपेष्टसाधनत्वमबाधितमेवेति वाच्यम् । समभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नसाधनत्वे लिङः शक्ततया निरुक्तस्थले स्वर्गत्वावच्छिन्नसाधनत्वस्यैव बोधात् तस्य च मण्डलीकरणे बाधितत्वादित्यत आह—**स्वर्गकाम इति ।**

**प्रयोजकत्वभानेनेति ।** उद्देश्यविधेयभावस्थले विधेये उद्देश्यतावच्छेदकप्रयोज्यत्वभानस्य व्युत्पत्तिसिद्धत्वात् स्वर्गकामनाविशिष्टोद्देश्यकबोधे उद्देश्यतावच्छेदकस्वर्गकामनायां विधेयभूतमण्डलीकरणकर्तव्यत्वप्रयोजकत्वं भासते इति भावः ।

**तदर्थबाधेनेति ।** फलकामनया साधने प्रवृत्तेः तत्फलकामनाया एव तन्निष्ठकर्तव्यताप्रयोजकत्वेन स्वर्गस्य मण्डलीकरणफलत्वाभावात् स्वर्गकामनायां मण्डलीकरणकर्तव्यत्वप्रयोजकत्वं बाधितमिति भावः ।

**न चेष्टसाधनत्वस्य विधिप्रत्ययार्थत्वानुपगमे स्वर्गकामो यजेत इत्यादिवाक्याद्यागादौ प्रवृत्त्यनुपपत्तिः । तत्राभावगोचरद्वेषघटित-सामग्र्यसंभवात् यागाद्यभावस्य नरकादिरूपद्विष्टसाधनत्वाभावात् । इष्टसाधनत्वबोधकमानाभावेन तज्ज्ञानघटितसामग्र्या अपि भवन्मते दुर्घटत्वादिति वाच्यम् । इष्टसाधनत्वस्य विध्यर्थताविरहेऽपि स्वर्गासाधनं न स्वर्गकामनाधीनकृतिसाध्यमिति इतरबाधबलात् स्वर्गकामकृति-साध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्योक्तविधिजन्यबोधे भानाद्यागादाविष्टसाधनताज्ञानादेव प्रवृत्तिनिर्वाहात् ।**

विवरणम्

**अभावगोचरेति** । यागाद्यभावगोचरेत्यर्थः ।

**द्विष्टसाधनत्वाभावादिति** । नित्यकर्मणः अकरणमेव नरकसाधनं यागस्तु न नित्यः इति तदकरणस्य नरकसाधनत्वं नास्तीति भावः ।

भवन्मते — इष्टसाधनत्वस्य लिङर्थत्वमस्वीकुर्वतां मीमांसकानां मते ।

**इतरबाधबलादिति** । शाब्दसामग्रीसहितमनुपपत्तिज्ञानमुपादानम् । तदधीनबोधः औपादानिकः । प्रकृते च इतरबाधज्ञानसहकृतशाब्द-सामग्र्या स्वर्गसाधनं यागः स्वर्गकामकृतिसाध्यः इति बोधो जायते । अस्य बोधस्य यागगतस्वर्गसाधनतांशे औपादानिकत्वम् । तत्र च पदजन्येष्टसाधनत्वोपस्थितिर्नापेक्षिता । इतरांशे शाब्दत्वं तस्य बोधस्य । शाब्दत्वमौपादानिकत्वञ्च एकज्ञान एव विषयरूपावच्छेदकभेदेन तिष्ठतः । ते च जाती अखण्डोपाधी वेत्यन्यदेतदिति मीमांसकसमयो बोध्यः ।

**इत्थञ्च सन्ध्यावन्दनादौ तत्कालावच्छिन्नशौचादिकमेवाधिकारो न तु फलकामनापि । अतः फलकामनाशून्यस्यापि शौचादिमतः सन्ध्यावन्दनाकरणं प्रत्यवायजनकम् । फलकामनायास्तत्राधिकारत्वे तच्छून्यस्यानधिकारितया तदकरणं न प्रत्यवायमावहेत् ।**

**न च मुमुक्षापवादेन स्वर्गादिरूपफलकामनायाः कदा चिदसंभवेऽपि नरकाभावरूपफले नियमत एवेच्छा संभवतीति न शौचादिमतः**

विवरणम्

निष्फलेऽपि नित्यकर्मणि इष्टसाधनताज्ञानाघटितसामग्र्या प्रवृत्तिमुपपाद्य, तस्य सफलत्वे फलकामनाया अधिकारत्वप्रसङ्गं बाधकं सूचयति— **इत्थञ्चेति** । नित्यकर्मणः निष्फलत्वे चेत्यर्थः ।

**तत्कालावच्छिन्नेति** । यस्मिन्काले कर्तव्यतया सन्ध्यावन्दनादिकं विहितं तत्कालावच्छिन्नेत्यर्थः ।

**न तु फलकामनापीति** । सफलकर्मणि तत्फलकामनाया अधिकारत्वात् तस्य सफलत्वे फलकामनाप्यधिकारः स्यादिति भावः ।

**न प्रत्यवायमावहेदिति** । शुचित्वे सति फलकामनावतः तद्रहितस्य वा नित्याकरणमवश्यं प्रत्यवायमुत्पादयतीति सिद्धान्तः ।

नित्यकर्मफलकामना सर्वस्याप्यस्ति स्वर्गादिषु विरक्तस्यापि मुमुक्षोः नरके द्वेषसत्त्वेन तदभावरूपफलेच्छायाः संभवादिति शङ्कते— **न चेति** ।

**सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्वानुपपत्तिरिति वाच्यम् । नरकाद्यनुपस्थित्यैव तदभावाज्ञानेन तदिच्छाविरहोपपत्तेरित्याहुः ।**

विवरणम्

**तदभावाज्ञानेनेति ।** सुखदुःखाभावयोरिच्छायां तज्ज्ञानस्य हेतुत्वादिति भावः ।

विना इष्टसाधनताज्ञानं न प्रवृत्तिः प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्यायात् । तथा च सन्ध्योपासनादौ प्रवृत्तिजननाय सन्ध्यामुपासीत इति विधिवाक्याधीनः इष्टसाधनताबोध आवश्यक इति लिङः इष्टसाधनतार्थकत्वमावश्यकम् । सन्ध्योपासनादाविव प्रायश्चित्तादावपि नरकात्यन्ताभावनिरूपितक्षेमसाधारणसाधनताज्ञानादेव प्रवृत्तिः । सन्ध्योपासनादेः काम्यत्वे तद्विरुद्धं नित्यत्वं न स्यादिति न शङ्क्यम् । फलजनकत्वेऽपि प्रत्यवायकारणीभूताकरणप्रतियोगित्वरूपानित्यत्वसंभवात् । यदि तयोर्विरुद्धत्वमित्याग्रहः तदा नरकात्यन्ताभावातिरिक्तफलसाधनत्वं काम्यत्वं वाच्यम् । न च नित्यकर्मणां फलजनकत्वे 'अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्विकः'। इति गीताविरोध इति वाच्यम् । यज्ञो दानं तपः कर्म पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् । इत्यष्टादशेऽध्याये पावनत्वस्योक्तत्वात् । सफलस्यापि फलानुसन्धानं विना क्रियमाणस्य पावनत्वमभिहितम् । ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधः शिरोमणिभिरेव निरस्तः । अतश्च नरकप्रागभावाद्यधिकरणेऽप्यात्मनि नरकात्यन्ताभावः

**तदसत् — ध्वंसादेरत्यन्ताभावविरोधिताया निष्प्रमाणकतया नरकात्यन्ताभावस्यैव प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसंभवादिष्टसाधनताज्ञानाघटितप्रवृत्तिसामग्र्या असिद्धेः ।**

**कारणान्तरकल्पनापेक्षया [118] गुरुशरीरक्षेमसाधारणसाधनताज्ञानस्यैव सर्वत्र प्रवृत्तिहेतुतेति । दण्डात् घटः इत्यादिप्रतीतिबलात्**

विवरणम्

संभवतीति तत्साधनत्वमेव सन्ध्यामुपासीतेत्यादौ लिङा बोध्यते इत्याशयेन मीमांसकमतं दूषयति— **तदसदिति** ।

इष्टसाधनताज्ञानाघटितप्रवृत्तिसामग्र्याः प्रायश्चित्तादौ क्लृप्तत्वं 'नास्तीति बोधयितुमाह—**प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसंभवादिति** ।

ननु कारणतावच्छेदकगौरवेण क्षेमसाधारणसाधनताज्ञानं न प्रवृत्तिकारणमित्युक्तमित्यत आह — **कारणान्तरकल्पनेति** । क्लृप्तकारणतायामवच्छेदकगौरवापेक्षया इष्टसाधनताज्ञानाघटितायां सामग्र्यां अतिरिक्तकारणतायाः कल्पनमतिगौरवग्रस्तमिति भावः ।

अत्र " किञ्च फलोपधायकत्वरूप एव क्षेमसाधारणसाधनत्वे गौरवमस्ति । न तु स्वरूपयोग्यतारूपेऽपीत्याह — दण्डादिति । दण्डाद्घट इत्यत्र दण्डत्वावच्छेदेन घटसाधनत्वं प्रतीयते । न च दण्डत्वावच्छेदेन फलोपधायकत्वरूपं साधनत्वमस्ति अरण्यस्थदण्डे व्यभिचारादिति दण्डत्वावच्छेदेन

118. क्षेमसाधनताज्ञानस्य (ब. कृ.)

**स्वरूपसंबन्धविशेषरूपस्य क्षेमसाधारणसाधनत्वस्योपगमे तच्छरीर-[119] गौरवस्याभावाच्चेति ।**

**नित्यस्थले शौचादिफलकामनयोरुभयोरधिकारत्वेऽपि प्रत्येकमेव**

विवरणम्

स्वरूपसंबन्धविशेषरूपं — स्वरूपयोग्यतारूपमेव साधनत्वं स्वीकार्यम् । अरण्यस्थदण्डादावपि स्वरूपयोग्यतारूपसाधनत्वस्य सत्त्वादित्यर्थः'' (६३२-पृ) इत्यादर्शः ।

प्रतियोगित्वं स्वरूपसंबन्धविशेषः कारणत्वं स्वरूपसंबन्धविशेषः अभावत्वं स्वरूपसंबन्धविशेषः इत्यादितान्त्रिकव्यवहारेषु स्वरूपसंबन्ध-विशेषपदस्य स्वरूपयोग्यतार्थकत्वं न युज्यते । स्वरूपयोग्यत्वस्य कारणतावच्छेदकधर्मवत्त्वरूपत्वात् स्वरूपसंबन्धविशेषपदेन कथमपि स्वरूप-योग्यताया अलाभात् । स्वरूपयोग्यतायां दण्डाद्घटः इति प्रतीतिरूप-प्रमाणोपन्यासस्य वैयर्थ्याच्च । तस्मादयमर्थः । कारणत्वं न नियतपूर्व-वृत्तित्वरूपं नाप्यतिरिक्तः पदार्थः अपि तु कार्यकारणयोः कश्चन संबन्धः । तत्र च प्रमाणं दण्डाद्घटः इति प्रतीतिः । स च संबन्धो नातिरिक्तः किन्तु कारणस्वरूप इति ।

नित्यस्य फलजनकत्वपक्षे इत्थञ्चेत्यादिना ग्रन्थेनोक्तं दूषणमुद्धरति— **नित्यस्थले इति ।**

119. गौरवस्यापि (ब॰)

**तयोरेधिकारता । न तु मिलितयोरिति फलकामनाशून्यस्यापि शौचादिमतः अधिकारितया तस्यापि नित्याकरणं प्रत्यवायजनकम् । अथवा सन्ध्यावन्दनाकरणेन प्रत्यवायजनने अधिकारैकदेशशौचादिमत्त्वमेव सहकारि न तु फलकामनापि । तदसत्त्वेऽपि प्रत्यवायोत्पत्तेः सर्वसिद्धत्वात् ।**

**एतेन संवलिताधिकारानुपगमे शौचादिशून्यफलकामनावतः दैवान्नित्याकरणं प्रत्यवायं जनयेदिति निरस्तम् । अत एव नित्यकाम्यजयन्तीव्रतादौ फलकामनाया अधिकारत्वस्य सर्वसिद्धतया शौचादिमतः फलकामनारहितस्य तदकरणं प्रत्यवायं जनयति ।**

विवरणम्

वक्ष्यमाणास्वरसादाह— **अथ वेति** ।

एतेन— अथवेति पक्षावलम्बनेन ।

संवलिताधिकारानुपगमे — शुचित्वफलकामनयोः प्रत्येकमधिकारत्वपर्याप्त्यधिकरणत्वे इति यावत् ।

अधिकारैकदेशस्य शुचित्वस्यैव प्रत्यवायजनने सहकारित्वस्यान्यत्र क्लृप्ततामाह— **अत एवेति** ।

इदन्तु बोध्यम् । **नव्यमीमांसकाः**, प्रवृत्तिसाधनज्ञानाक्षेपकः प्रवर्तनापदाभिधेयः पुरुषाभिप्रायो लोके विधिः (लिङर्थः) अपौरुषेये वेदे तु लिङादिनिष्ठः अलौकिको व्यापारः । तथा हि, गामानयेत्यादिकं राज्ञो

विवरणम्

वचनं श्रुत्वा गवानयने प्रवृत्तः पुरुषः राजानं प्रवर्तकं ब्रूते । यस्याभिप्रायं विदित्वा पुरुषः प्रवर्तते क्रियासु स प्रवर्तकः । न च प्रवृत्तिकारणेष्ट-साधनताबोधजनकलिङाद्युच्चारयितृत्वमेव प्रवर्तकत्वमिति वाच्यम् । राज-प्रेरणया आनयेति लिङन्तशब्दमुच्चारयितुः पदातेरपि प्रवर्तकत्वापातात् । न चान्याप्रेरितत्वे सति तादृशलिङाद्युच्चारयितृत्वमेव प्रवर्तकत्वमिति वाच्यम् । तथा सति पित्रा पिशुनेन वा प्रेरितस्य राज्ञोऽपि प्रवर्तकत्वं न स्यात् । तस्मात्प्रवृत्तिकारणज्ञानविषयेच्छाश्रयत्वमेव प्रवर्तकत्वम् ।

प्रवर्तकेच्छाज्ञानञ्च लिङादिनैव जायते इति लिङ्वाच्या इच्छा । सा च अयमत्र प्रवर्ततामित्याकारिका प्रवर्तनेत्यभिधीयते । तया च धात्वर्थे इष्टसाधनत्वमनुमीयते । पाकयागादिकं, इष्टसाधनं, अयमत्र प्रवर्ततामित्या-कारकाप्तेच्छाविषयप्रवृत्तिविषयत्वात् इत्यनुमानं फलितम् । इत्थञ्चानुमान-लभ्यमिष्टसाधनत्वं न लिङर्थः अनन्यलभ्यः शब्दार्थः इति न्यायात् ।

न चैवं प्रवर्तना इष्टसाधनत्वेनानुमातुं शक्या येनेच्छा अन्यलभ्येति लिङर्थो न स्यात् । विषयविशेषस्येष्टसाधनत्वेऽपि आप्तेच्छाविषयत्वा-भाववत्त्वेन व्यभिचारात् । अतः अनन्यलभ्या प्रवर्तनैव लिङर्थः ।

प्रवर्तनात्वञ्च प्रवृत्त्यनुकूलव्यापारत्वम् । तच्च लोके पुरुषाशये, वैदिक-लिङादिशब्दनिष्ठालौकिकव्यापारे चास्ति । तत्र चानुकूलत्वं न कारणत्वम् । अभिप्रायाभावेऽपि तद्भ्रमेण प्रवृत्तेर्दर्शनात् । नापि प्रवृत्त्यनुकूलत्वं

विवरणम्

प्रवृत्तिकारणज्ञानविषयत्वम् । इष्टसाधनताज्ञानस्यैव प्रवृत्तिकारणत्वेन पुरुषाभिप्रायज्ञानस्यान्यथासिद्धत्वात् । अपि तु प्रवृत्तिप्रयोजकत्वमेव । पुरुषाभिप्रायस्य इष्टसाधनत्वानुमितिद्वारा प्रवृत्तिप्रयोजकत्वमुपपादितम् । यजेतेत्यादिवैदिकशब्दश्रवणोत्तरं इष्टसाधनत्वमनुमायैव यागादौ प्रवर्तते । इष्टसाधनत्वानुमापकेच्छा चापौरुषेये वेदे नास्ति । अतः कार्यानुमेयः लिङादिनिष्ठः अलौकिको धर्मः लिङ्वाच्यः कल्प्यते । तस्येष्टसाधनत्वानुमापकत्वमपि कल्प्यते इति अलौकिकव्यापारस्यापि प्रवृत्तिप्रयोजकत्वरूपं प्रवर्तनात्वमक्षतमेव । प्रवृत्तिप्रयोजकव्यापारत्वञ्च न लिङादिशक्यतावच्छेदकं गौरवात् प्रवृत्तेराख्यातेन प्रयोजकत्वस्य संसर्गमर्यादया च भानसंभवेनान्यलभ्यत्वाच्च । अपि तु अनन्यलभ्यं लघुभूतञ्च व्यापारत्वमेव ।

पचेदित्यादौ लिङादिना व्यापारत्वेनोपस्थितः व्यापारः स्वज्ञानजन्यानुमितिप्रयोज्यत्वेन तादृशप्रयोज्यत्वत्वेनानुपस्थितेन संबन्धेन आख्यातार्थकृतावन्वेति । भावप्रधानमाख्यातमिति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति आख्यातार्थभावनाया एव विशेष्यत्वबोधनात् ।

यथा च घटवद्भूतलमित्यत्र घटपदादुपस्थितस्य घटत्वावच्छिन्नस्य योग्येन संबन्धेन भूतले अन्वयबोधे जाते तादृशसंबन्धः कः इति जिज्ञासायां मानान्तरेण संयोगत्वावच्छिन्नसंसर्गलाभः भूतलादिपदसमभिव्याहाराच्च भूतलवृत्तिघटविशेषलाभश्च भवति । एवं चैत्रः पचेदिति वाक्यात् व्यापारवती चैत्रनिष्ठा पाककृतिरिति बोधो जायते । ततः लिङर्थस्य व्यापारस्य कृतौ कः संबन्धः इति तत्त्वेन जिज्ञासायां

विवरणम्

मैत्रप्रेरितोऽहं पचामीति व्यवहारबलात् व्यापारः इच्छारूपः इत्यवगम्यते । प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वस्यैव प्रवर्तकत्वरूपतायाः प्रागभिहितत्वात् । पचेदिति समभिव्याहारेण पाककृतिसंबन्धात् पाके अयं प्रवर्ततामित्याकारिका सेति ज्ञायते । तादृशेच्छाश्रये चैत्रादौ वचनेङ्गितादिना आप्तत्वे गृहीते, पाकादौ पाकेऽयं प्रवर्ततामित्याकारकाप्तेच्छाविषयप्रवृत्तिविषयत्वरूपहेतुज्ञानं मानसं समुत्पद्यते । अथ तत्र हेतौ इष्टसाधनत्वव्याप्तिस्मरणात् पाके इष्टसाधनत्वानुमितिर्जायते । तस्याश्च प्रवृत्तिप्रयोजकत्वं सिद्धमेवेति रीत्या संसर्गविशेषलाभः व्यापारविशेषलाभश्च संभवति ।

एवमेव यजेतेत्यादिवैदिकवाक्यात् निरुक्तसंबन्धेन व्यापारवती यागकृतिः इति शाब्दबोधे जाते, संबन्धस्य तत्त्वेन जिज्ञासायां, वेदस्थलिङादिप्रेरितोऽहं यागादि करोमीति व्यवहारात्, तस्य व्यापारस्य लिङादिनिष्ठत्वं यजेतेति समभिव्याहारलब्धयागकृतिसंबन्धात् यागे अयं प्रवर्ततामित्याकारकत्वञ्चावगम्यते । अपौरुषेये लिङादौ निर्दोषत्वज्ञानेन अनाप्तभिन्नत्वे अवगते प्रतारणाद्यजन्यहिताहितोपदेशजनकत्वरूपमाप्तत्वमवधारितं भवति । ततो मनसा प्रतारणाद्यजन्यहिताहितोपदेशजनकनिष्ठः यः यागे अयं प्रवर्ततामित्याकारको व्यापारः तद्विषयप्रवृत्तिविषयत्वरूपहेतुज्ञानमुत्पद्यते । अथ च तत्रेष्टसाधनत्वव्याप्तिस्मरणेन लोक इव प्रवृत्तिप्रयोजिका इष्टसाधनत्वानुमितिर्भवतीति संसर्गविशेषः व्यापारविशेषश्च लभ्यते ।

अथवा स्वतःसिद्धप्रवृत्तौ प्रेरणाया अप्रयोजकत्वात् प्रेरणाप्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यधर्मविशेषः सिद्ध्यति । तदवच्छिन्नप्रयोजकता-

विवरणम्

वच्छेदकं प्रेरणात्वमखण्डो धर्मः आप्तेच्छालौकिकव्यापारोभयसाधारणः। तादृशमखण्डं प्रेरणात्वमनतिप्रसक्तं लिङादिपदशक्यतावच्छेदकं ब्रूमः।

अथवा, अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयिताविशेषः पुरुषाभिप्रायालौकिकव्यापारोभयसाधारणः। तदवच्छिन्नस्यैव प्रवृत्तिप्रयोजकतेति तादृशविषयिताविशेष एव लिङादिशक्यतावच्छेदकः। यदि च तादृशी विषयिता इच्छामात्रवृत्तिरिति मन्यते। तदा वैदिकलिङादिष्वपीच्छां स्वीकुर्मः। शब्दस्यास्मन्मते द्रव्यत्वेन तत्रेच्छारूपगुणसत्त्वे बाधकाभावात्। यदि च इच्छा आत्ममात्रनिष्ठा नाचेतनशब्दनिष्ठेति विभाव्यते। तदा औपनिषदमीश्वरमप्यङ्गीकृत्य तदीयेच्छैव लिङर्थः इति स्वीकुर्मः।

वस्तुतस्तु पूर्वोक्तविषयिताविशेषापेक्षया लाघवादिच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका। चैत्रः पचेदित्यादिलौकिकवाक्यघटकलिङा इच्छात्वावच्छिन्नस्योपस्थितिर्जायते। तस्य निरुक्तसंबन्धेन कृतावन्वये बुद्धे इच्छाविशेषलाभः संबन्धविशेषलाभश्च भवति। वैदिकं लिङादिकं सर्वमपि अलौकिकप्रेरणां लक्षणया बोधयति। सापि तेनैव संबन्धेन कृतावन्वेति इति निरूपयन्ति।

तन्न समीचीनम्। प्रेरणायाः लिङर्थतावादिभिरपि इष्टसाधनत्वानुमानद्वारैव प्रवृत्तेरुपपादनेन इष्टसाधनताज्ञानावश्यकतायाः स्वहस्तितत्वात् लिङ्वाच्यमिष्टसाधनत्वमिति स्वीकरणमेवोचितम्। न तु वक्तुरिच्छा अलौकिकव्यापारो वा लिङो वाच्य इति।

### विवरणम्

न च राजादेः प्रवर्तकत्वव्यवहारानुरोधेन तदिच्छाज्ञानमावश्यकमिति अनन्यलभ्या इच्छैव शक्या न तया लभ्यमिष्टसाधनत्वमित्युक्तमेवेति वाच्यम् । यदा चैत्रः पचेति शब्दं नोच्चारयति । मैत्रस्तु इङ्गितादिना तस्येच्छामनुमायं पाकं करोति । तदा केन प्रेरितस्त्वं पांकं करोषि इति पृष्टो मैत्रः, नाहं चैत्रेण प्रेरितः किन्तु तदभिप्रायं विदित्वा पचामीति ब्रूते । एवमेव चैत्रोऽपि न मयायं प्रेरितः किन्तु स्वबुद्धिचातुर्येण मदभिप्रायं ज्ञात्वा पचतीति वदति । प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वस्य प्रवर्तकत्वरूपत्वे तस्य चैत्रे अक्षतत्वात् निरुक्तव्यवहारो नोपपद्येत । अतः न तादृशेच्छाश्रयत्वं प्रवर्तकत्वम् ।

अपि तु प्रवृत्तिकारणेष्टसाधनताबोधजनकलिङाद्युच्चारयितृत्वम् । राज्ञोक्तात् गामानयेत्यादिवाक्यात् लिङर्थेष्टसाधनतां गवानयने बुध्वा प्रवर्तते । अतः राजा प्रवर्तकः इत्यभिधीयते । न च तादृशलिङादिकमुच्चारयितुः राजप्रेरितपदातेरपि प्रवर्तकत्वापत्तिः अन्याप्रेरितत्वेन विशेषणे पित्रादिना प्रेरितस्य राज्ञोऽपि प्रवर्तकत्वं न स्यादिति वाच्यम् । तादृशलिङाद्युच्चारयितृत्वे सति स्वातन्त्र्यस्यैव प्रवर्तकत्वरूपत्वात् । पित्रादिना प्रेरितस्यापि राज्ञः स्वातन्त्र्यमस्तीति प्रवर्तकत्वमुपपद्यते । पदातेरभिप्रायज्ञानं न प्रवृत्तिप्रयोजकं अपि तु राज्ञः इत्यत्र स्वातन्त्र्यस्यैव नियामकत्वात् तस्य प्रवर्तकत्वशरीरानुप्रवेशेन सर्वसामञ्जस्यात् । तस्मात् प्रवर्तकत्वव्यवहारानुरोधेन इच्छाज्ञानमावश्यकमिति सा लिङ्वाच्येत्युक्तिः न संगच्छते ।

विवरणम्

अपि च अनन्यलभ्यः शब्दार्थः इत्यस्य प्रमाणान्तरगम्यस्य शब्दार्थता नास्तीत्यत्र न तात्पर्यम् । अनुमानादिप्रमाणगम्यस्य वह्न्यादेरपि वह्निपदार्थताविलोपप्रसङ्गात् । अपि तु समभिव्याहृतेन पदेन पदसमभिव्याहारेण वा लभ्यस्य न शब्दार्थता इत्यत्रैव । द्वितीयायाः कर्मत्वमर्थः । तच्च क्रियाजन्यफलवत्त्वम् । तच्च संपूर्णं न द्वितीयाशक्यम् । क्रियायाः समभिव्याहृतेन धातुना लाभात् । जन्यत्वस्य विनापि पदार्थतां द्वितीयार्थधात्वर्थयोः संसर्गमर्यादया भानसंभवात् व्यापारमात्रस्य धात्वर्थत्वादनन्यलभ्यं फलमात्रं द्वितीयार्थः इति प्राचीननैयायिका निरूपयन्ति । द्वितीयार्थः क्रियाजन्यफलाश्रयरूपं कर्म । धातोः फलव्यापारोभयवाचकत्वेन धातोरेव फलव्यापारयोरुभयोर्लाभात् अनन्यलभ्यमाश्रयमात्रं द्वितीयार्थः इति प्राचीनवैयाकरणा मन्यन्ते । लिङः शक्यतावच्छेदकं निरूपयद्भिः नव्यमीमांसकैरपि प्रवृत्तिप्रयोजकव्यापारत्वरूपं प्रवर्तनात्वं न लिङः शक्यत्वावच्छेदकं, प्रवृत्तेराख्यातेन प्रयोजकत्वस्य संसर्गमर्यादया च भानसंभवात्, अपि तु अनन्यलभ्यं व्यापारत्वमिति प्रतिपादितम् । ईदृशेष्वेव स्थलेषु अनन्यलभ्यः शब्दार्थ इति न्यायः प्रवर्तते । स्पष्टश्चायमर्थो प्रथमाव्याख्याने रामरुद्रीये । तस्मादनुमानलभ्यत्वादिष्टसाधनत्वं न लिङर्थः इत्युक्तिः न संगता ।

अपि च यजेत स्वर्गकामः इत्यत्र लिङादौ अलौकिकव्यापारे मानाभावः । न च वेदस्थलिङ् मां प्रवर्तयतीति व्यवहारात् तत्र प्रवृत्तिप्रयोजकव्यापारविशेषः सिद्ध्यतीति वाच्यम् । प्रवृत्तिप्रयोजकेष्टसाधनताबोधकत्वस्यैव लिङादिवृत्तिप्रवर्तकतारूपत्वात् । न चेदं प्रवर्तकत्वं

विवरणम्

लौकिकपुरुषसाधारणम् । अस्मदभिमतं प्रवृत्तिप्रयोजकव्यापारवत्त्वन्तु तत्साधारणमिति तस्यैव प्रवर्तकतारूपत्वं स्वीकर्तव्यमिति वाच्यम् । अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयिताविशेषस्य लिङादिशक्यतावच्छेदकस्य आत्ममात्रसमवेतेच्छामात्रवृत्तित्वे ईश्वरेच्छैव वैदिकलिङः वाच्येति प्रतिपादयद्भिः भवद्भिरपि, लिङादिवृत्तिप्रवर्तकत्वस्य प्रवृत्तिप्रयोजकेच्छा-बोधकत्वरूपस्यैव वक्तव्यत्वात् । लौकिकपुरुषनिष्ठस्य प्रवर्तकत्वस्य प्रवृत्ति-प्रयोजकेच्छाश्रयत्वरूपस्य ततोऽन्यत्वात् ।

अन्यथा राज्ञो वाक्यं प्रेरयतीति व्यवहारदर्शनात् तत्रत्यलिङादावपि अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयिताविशेषविशिष्टः व्यापारः कल्प्यताम् । तस्यैव च लौकिकलिङ्वाच्यता स्वीक्रियताम् ।

वस्तुतस्तु वेदस्थले ईश्वरस्यैव प्रवर्तकत्वम् । तच्च लोक इव स्वतन्त्रत्वे सति प्रवृत्तिप्रयोजकेष्टसाधनताबोधकलिङाद्युच्चारयितृत्वरूपमेव । वैदिक-लौकिकलिङादीनान्तु प्रवृत्तिप्रयोजकेष्टसाधनताबोधकतारूपं प्रवर्तकत्वमिति बोध्यम् ।

एवं वैदिकलिङादौ अलौकिको व्यापारः, तस्य प्रवृत्ति-प्रयोजकेष्टसाधनतानुमापकत्वं, लिङ्वाच्यत्वञ्चेति त्रितयकल्पनामपेक्ष्य, प्रवृत्तिप्रयोजकत्वेन यागादिगतत्वेन च सर्वसिद्धस्य इष्टसाधनत्वस्य लिङर्थत्वमात्रकल्पनमेव लाघवादुचितम् ।

विवरणम्

अपि च ईश्वरेच्छायाः वैदिकलिङ्वाच्यतापक्षे भवद्भिः प्रतिपादिते ईश्वरेच्छाविषयप्रवृत्तिविषयत्वेन यागादाविष्टसाधनत्वानुमानं न संभवति । विद्यमानसर्वविषयिणी ईश्वरेच्छा निष्फले चैत्यवन्दनादौ प्रवर्तमानस्य भ्रान्तस्य प्रवृत्तिमपि सतीमवगाहते । इत्थञ्च इष्टसाधनत्वरूपसाध्याभाववति चैत्यवन्दनादौ ईश्वरेच्छाविषयप्रवृत्तिविषयत्वरूपहेतोः सत्त्वेन व्यभिचारः । न च हेतुप्रविष्टप्रवृत्तौ इष्टसाधनत्वविशेषणान्न व्यभिचारः ईश्वरेच्छाविषयेष्टसाधनप्रवृत्तिविषयत्वस्य तत्राभावादिति वाच्यम् । इष्टसाधनताघटितहेतुज्ञानस्यैव दुर्लभत्वात् । सुलभत्वे तत एव धात्वर्थयागादावपि इष्टसाधनत्वस्य ज्ञेयत्वेनानुमानस्य विफलत्वात् ।

अपि च वस्तुतस्त्वित्यादिनाभिहिते इच्छात्वस्य जातेः लिङादिशक्यतावच्छेदकत्वकल्पे, सर्वेषां वैदिकलिङां अलौकिकप्रेरणायां, निषेधस्थलेषु निवृत्तिविषयित्वावच्छिन्ने च लक्षणाकल्पनया, तज्जन्योपस्थितीनां तत्र तत्र शाब्दबोधे हेतुत्वकल्पनया च गौरवं दुष्परिहरम् । इत्थञ्च न विधौ परः शब्दार्थः इति वचनं सुदूरमुत्सारितं भवति ।

एवं सर्वत्र विधिवाक्यजन्यबोधानन्तरं इष्टसाधनत्वानुमितिप्रयोजिका तादृशहेतौ व्याप्तिज्ञानपक्षधर्मताज्ञानादिघटिता सामग्री कल्पनीयेति च गौरवं वज्रलेपायते । अपि च संसर्गभासकाकांक्षाज्ञानतात्पर्यज्ञानादिघटितसामग्र्यामपि सत्यां यजेतेति वाक्याद्व्यापारवती यागकृतिरिति शाब्दबोधे जाते प्रमाणान्तरेण संसर्गविशेषज्ञानस्य, इष्टसाधनत्वानुमितिहेतुज्ञानस्य च संपादने क्लेश एव पर्यालोचितः लिङः इष्टसाधनत्वे शक्तिं व्यवस्थापयतीति बोध्यम् ।

विवरणम्

**नव्यवैयाकरणास्तु,** लिङर्थो विधिः प्रेरणा । इयमेवाज्ञेत्युच्यते । महाभाष्यकारः विधिः प्रेरणमिति बभाषे । न्यायभाष्यकारोऽपि विधिर्नियोग इत्याह । नियोगः नियोजनं नियोजयतीत्यादिप्रतिपाद्यः प्रवर्तकपुरुषनिष्ठः व्यापारविशेषः ।

प्रवर्तकत्वञ्च लिङाद्युच्चारयितृत्वे सति स्वतन्त्रत्वम् । लोके गामानयेति शब्दोच्चारयितुः प्रवर्तकस्य, तादृशशब्दप्रयोगः प्रयुज्यमानः लिङन्तशब्दो वा प्रेरणा । सा स्वप्रयोक्तृत्वसंबन्धेन प्रवर्तकपुरुषे वर्तते । अपौरुषेये वेदे तु लिङन्तः शब्द एव प्रवर्तकः । लिङर्थः प्रेरणापि स एव । न च प्रवर्तकनिष्ठस्यैव प्रवृत्त्यनुकूलव्यापारस्य प्रेरणात्वात् वैदिकलिङन्तशब्दस्यातथाभूतस्य कथं प्रेरणात्वम् । न हि स्वात्मकप्रवर्तकनिष्ठत्वं तस्य संभवतीति वाच्यम् । अधिकरणीभूतभूतलस्वरूपस्य घटाभावस्य घटाभावत्वेन भूतलवृत्तित्वमिव, प्रेरणात्वेन रूपेण स्वात्मकप्रवर्तकनिष्ठत्वमुपपद्यते ।

प्रेरणात्वञ्च प्रेरयत्यादिप्रतिपाद्यतावच्छेदकतया सिद्धः अखण्डो धर्मः । इमां प्रेरणां शब्दरूपत्वाच्छाब्दी भावनेति व्यवहरन्ति । इयं प्रेरणात्वेन सविषया । इत्थञ्च पचेदिति वाक्यात्प्रेरणाविषयः पाकः इति शाब्दबोधः जायते । ततः आप्तोक्तप्रेरणाविषयत्वेन हेतुना पाकादौ इष्टसाधनत्वमनुमाय प्रवर्तते । विनेष्टसाधनताज्ञानं न प्रवृत्तिः । इष्टसाधनत्वञ्च न लिङर्थः प्रेरणात्वाभावात् । प्रेरणा हि

विवरणम्

प्रवर्तकपुरुषनिष्ठा । इष्टसाधनत्वन्तु धात्वर्थगतम् । नापि इष्टसाधनताबोधः प्रवर्तकपुरुषवृत्तिः तस्य श्रोतृनिष्ठत्वात् । न चेष्टसाधनताज्ञापनं प्रवर्तकपुरुषनिष्ठमिति वाच्यम् । तावता तस्यैव प्रेरणात्वं संभवति नेष्टसाधनत्वस्य तस्य ततोऽन्यत्वात् । इष्टसाधनताज्ञापनमेव प्रेरणा लिङर्थ इत्युक्तौ अस्मदभिप्रेतार्थ एव प्रकारान्तरेणोक्तो भवति । इष्टसाधनताज्ञापनं इष्टसाधनताज्ञानानुकूलव्यापारः लिङन्तशब्दरूपः । तस्येष्टसाधनताज्ञानानुकूलत्वञ्चानुपदमेवोक्तमिति ।

एवं यजेतेति वैदिकवाक्यादपि प्रेरणाविषयः यागः इति शाब्दबोधो जायते । बह्वायाससाध्ये यागादौ सामान्यतः इष्टसाधनताज्ञानं न प्रवर्तकम् । अपि तु विशिष्य स्वर्गत्वादिना स्वर्गादिसाधनताज्ञानमेव । यजेतेत्यादिकप्रेरणाविषयत्वे स्वर्गसाधनत्वव्याप्तिज्ञानं उपदेशेन शाब्दबोधरूपं जायते । ततश्च यागे स्वर्गसाधनत्वस्यानुमानाद्यागादौ प्रवर्तते पुरुषः । प्रथमोपदेष्टुः पुरुषस्य व्याप्तिज्ञानं योगाद्भवति । तस्मात् प्रेरणा लिङ्घटितशब्दरूपा लिङर्थः इति प्रतिपादयन्ति ।

तदपि न समञ्जसम् । इष्टसाधनताज्ञानं विना प्रवृत्त्यनुत्पादस्य सर्वसंमतत्वेन प्रवृत्तिप्रयोजकत्वेन क्लृप्तमिष्टसाधनत्वमेव लिङर्थ इति युज्यते । तदेव प्रवृत्तिप्रयोजकत्वात्प्रेरणाव्यपदेशं लभते । यदाहुः 'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम् ॥' इति । न च प्रवर्तकनिष्ठस्यैव प्रवृत्त्यनुकुलस्य प्रेरणात्वात् धात्वर्थगतस्येष्टसाधनत्वस्य कथं प्रेरणात्वमिति वाच्यम् । तस्यापि

विवरणम्

स्वबोधकशब्दप्रयोगानुकूलकृतिमत्त्वसंबन्धेन प्रवर्तकनिष्ठत्वेन प्रेरणात्वोपपत्तेः। न चास्य संबन्धस्य वृत्त्यनियामकत्वान्नानेन प्रवर्तकनिष्ठत्वमिष्टसाधनत्वस्येति वाच्यम्। भवदभिमतप्रेरणायाः लिङन्तशब्दस्यापि प्रवर्तकपुरुषे स्वप्रयोक्तृत्वमेव संबन्ध इति तस्यापि वृत्त्यनियामकतया तेन संबन्धेन प्रवर्तकनिष्ठत्वानिर्वाहेण प्रेरणात्वासंभवात्। शब्दप्रयोगस्य प्रेरणात्वेऽपि वृत्त्यनियामकेन स्वानुकूलकृतिमत्त्वसंबन्धेन प्रवर्तकपुरुषसंबन्धिनः प्रवर्तकनिष्ठत्वासंभवात्। अपौरुषेयत्वेन भवदभिमते वेदे लिङन्तशब्दरूपप्रेरणायाः वृत्त्यनियामकेन तादात्म्येन स्वात्मकप्रवर्तकनिष्ठत्वासंभवाच्च। तस्मात् स्वबोधकशब्दप्रयोक्तृत्वसंबन्धेन प्रवर्तकपुरुषसंबन्धिनः (निष्ठस्य) इष्टसाधनत्वस्य प्रेरणात्वं युज्यते। अपि च स्वज्ञानवत्त्वमपि पुरुषे इष्टसाधनत्वस्य संबन्धः। न च श्रोतुरेव तच्छाब्दबोध इति वाच्यम्। प्रयोक्तरि प्रयोगहेतुवाक्यार्थज्ञानस्यावश्यकत्वेन प्रवर्तके इष्टसाधनताज्ञानसत्त्वात्।

किञ्च तन्मते वेदस्यापौरुषेयत्वेन न लोक इव आप्तोक्तप्रेरणाविषयत्वेन हेतुना यागादाविष्टसाधनत्वानुमितिः हेतुज्ञानासंभवात्। वैदिकलिङादिरूपप्रेरणाविषयत्वेन हेतुना विशिष्य स्वर्गादिसाधनत्वानुमितिश्च न संभवति तत्र हेतौ स्वर्गसाधनत्वव्याप्तिज्ञानासंभवात्। महतामुपदेशात् शाब्दबोधरूपं तादृशव्याप्तिज्ञानं जायते इति यद्युच्यते। तदा यागे स्वर्गसाधनताज्ञानमेव उपदेशाधीनमिति स्वीक्रियताम्। किं विधिवाक्यार्थबोधेन। तस्माद्वेदस्थले इष्टसाधनताज्ञानस्यासंभवात् वैदिकलिङैव इष्टसाधनत्वं बोध्यते इति वक्तव्यम्। एवञ्च सर्वत्रैव लिङः इष्टसाधनतार्थकत्वस्वीकार एव युक्तः। तस्य प्रवृत्तिप्रयोजकत्वरूपं प्रेरणात्वमपि

**अपरे तु चैत्यं न वन्देत इति वाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम् । कृतिसाध्यत्वादिमति चैत्यवन्दनादौ कृतिसाध्यत्वाद्यभावस्य नञा बोधने तद्वाक्यस्याप्रामाण्यापत्तेः ।**

विवरणम्

क्लृप्तमेव । तन्मते प्रेरणात्वमखण्डो धर्मः लिङादिशब्दे कल्प्यते इति गौरवम् ।

अपि च, सविषयत्वेन सर्वसंप्रतिपन्नादात्मविशेषगुणाद्भिन्नस्य शब्दरूपप्रेरणायाः तत्तद्धात्वर्थविषयकत्वकल्पनागौरवं दुर्वारम् । न च नैयायिकैरपि शब्दस्य सविषयत्वं स्वीकृतमेव । 'गुरुं धर्मं पृच्छतीत्यत्र जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः शब्दे धर्मविषयकत्वान्वयः' इति द्वितीयायां भट्टाचार्यैरभिधानादिति वाच्यम् । शब्दस्य विषयता व्यापारानुबन्धिनी इति अनुपदं तैरभिधानात्, शब्दजन्यज्ञानस्य धर्मविषयकत्वाच्छब्दः धर्मविषयकतया व्यवहृतः । लिङर्थतादृशशब्दरूपप्रेरणायाश्च धात्वर्थपाकादिविषयकत्वं न तादृशमिति लिङर्थप्रेरणारूपशब्दस्य धात्वर्थविषयकत्वकल्पनागौरवस्य दुष्परिहरत्वात् । अपि च मीमांसकमत इवात्रापि विधिवाक्यजन्यबोधानन्तरं इष्टसाधनत्वानुमितिहेतुव्याप्तिज्ञानसंपादनायासोऽपि दुर्वारः । तस्मादिष्टसाधनत्वमेव लिङर्थ इति रमणीयमिति विभावनीयम् ।

प्रवर्तकज्ञानविषयस्यापि कृतिसाध्यत्वस्य अन्यलभ्यतया लिङर्थतां दूषयतां अनन्यलभ्यस्येष्टसाधनत्वस्य लिङर्थत्वं साधयतां मतमुपन्यस्यति — **अपरे त्विति** ।

विध्यर्थत्वं—लिङर्थत्वम् ।

कृतिसाध्यतायाश्च विधित्वं निर्युक्तिकम् । तदनङ्गीकारेऽपि कृतेराख्यातसामान्यार्थतया विधिप्रत्ययस्यापि तदर्थकतया पचेत इत्यादौ कृतेः पाकानुकूलत्वभानस्यावश्यकतयार्थात् पाकादावपि कृतिसाध्यताभानात् ।

कृतिसाध्यताया विधित्वेऽपि तत्तत्काल[120] तत्तत्पुरुषविशेषविशेषितकृतिसाध्यताविषयकस्य प्रवर्तकज्ञानस्य शाब्दबोधोत्तरमेव स्वीकरणीयतया विधिवाक्यजशाब्दबोधतः साक्षात्प्रवृत्त्यनिर्वाहात् ।

विवरणम्

विधित्वं—लिङर्थरूपत्वम् ।

**निर्युक्तिकमिति** । न च पङ्गुः समुद्रं न तरेदिति वाक्यस्य प्रामाण्यानुरोधेन कृतिसाध्यत्वस्य लिङर्थत्वमावश्यकं इष्टसाधनत्वबलवद्-निष्टाननुबन्धित्वयोरभावस्य समुद्रतरणे बाधितत्वात् पङ्गुकृतिसाध्यत्वाभावस्यैवाबाधादिति वाच्यम् । पङ्गौ इष्टसाधनीभूतसमुद्रतरणानुकूलकृत्यभावस्य बोधोपगमेन तद्वाक्यप्रामाण्यनिर्वाहात् ।

विधिप्रत्ययस्य—आख्यातसामान्यान्तर्गतस्य लिङादेः ।

तदर्थकतया—कृत्यर्थकतया ।

**अर्थादिति** । तथा च पाकानुकूलकृतिशाब्दबोधोत्तरं मानसः पाके कृतिसाध्यताबोधो जायते इति भावः ।

120. तत्तत्पुरुषविशेषित (ब. कृ.)

**अस्तु वा साध्यतासंबन्धेनैवाख्यातसामान्यार्थकृतेः क्रियायां विधिप्रत्ययजन्यबोधे भानम् । प्रवर्तिका चिकीर्षापि साध्यतासंबन्धेन कृतिप्रकारिका क्रियेच्छैव । न च लडादिस्थले आख्यातार्थकृतेः क्रियाविशेषणतयैव भानमिति व्युत्पत्तेः क्लृप्तत्वात् पचेत इत्यादौ न तस्याः**

विवरणम्

नन्वेवं विधिवाक्यार्थबोधात्प्रवृत्तिर्न स्यात् शाब्दसमनन्तरभाविमानसज्ञानादेव प्रवृत्तेरुदयादित्याशङ्कामिष्टापत्त्या परिहरति — **कृतिसाध्यताया इति ।**

विधिवाक्यजन्यशाब्दबोधस्य साक्षात्प्रवर्तकत्वाग्रहेऽप्याह— **अस्तु वेति ।**

ननु प्रवृत्तिहेतुश्चिकीर्षा कृतिसाध्यत्वप्रकारकेच्छा । तस्याश्च स्वसमानप्रकारकं कृतिसाध्यताज्ञानं कारणमिति पाकविशेष्यकसाध्यतासंसर्गककृतिप्रकारकशाब्दबोधान्न चिकीर्षासंभव इति साक्षात्प्रवर्तकत्वं न संभवतीत्यत आह— **प्रवर्तिका चिकीर्षापीति ।**

**आख्यातार्थस्यैव कृतेरित्यादि ।** चैत्रेण पच्यते इत्यादौ आख्यातत्वेन तदर्थकृतेः जन्यतासंबन्धेन धात्वर्थे पाके, तस्य च पुनराख्यातार्थकर्मत्वेऽन्वयः । आख्यातार्थकृत्यन्वयि आधेयत्वं चैत्रादिपदोत्तरतृतीयार्थः । आख्यातार्थकालस्य तदर्थे कृतावेवान्वयः । तृतीयायाः कृत्यर्थकत्वे सुबर्थे तत्र आख्यातार्थकालान्वयापत्त्या व्युत्पत्तिविरोधः स्यादिति प्राचीनसिद्धान्तः ।

**क्रियाविशेषणतया भानसंभव इति वाच्यम् । व्युत्पत्तिवैचित्र्येण तदुपपत्तेः । शक्त्यभेदेऽपि व्युत्पत्तिभेदे बाधकाभावात् । अत एव प्राचीनैराख्यातार्थस्यैव कृतेः कर्मप्रत्ययस्थले क्रियाविशेषणतया भानमुपेयते । [121]एवं क्वचित् पाकादाविव सर्वत्रैव याग[122]पाकादौ लौकिकप्रमाणादेव कृतिसाध्यताबोधो निर्वहतीति वदन्ति ।**

**न कलञ्जं भक्षयेदित्यादिनिषेधविधेः प्रामाण्यानुरोधतो**

विवरणम्

**लौकिकप्रमाणादेवेति** । लौकिकप्रमाणलभ्यत्वेन अनन्यलभ्यत्वाभावात् न कृतिसाध्यत्वस्य लिङर्थत्वमित्यत्र न तात्पर्यम् । अनन्यलभ्यः शब्दार्थः इत्यस्य मानान्तरागोचरस्यैव शब्दार्थत्वमित्यत्र तात्पर्याभावस्याभिहितत्वात् । अपि तु ये कृतिसाध्यत्वस्य लिङर्थतामैदम्पर्येण स्थापयन्ति मीमांसकाः, तेषां मते यजेतेत्यादिश्रुतेः तदभिमतं अनधिगताबाधितार्थबोधकत्वलक्षणं प्रामाण्यं न स्यादिति भावः ।

बलवदनिष्टाननुबन्धित्वं विचारयितुमादौ तस्य लिङर्थतास्वीकारे युक्तिमाह — **न कलञ्जमिति** ।

**निषेधविधेः प्रामाण्यानुरोधत इति** । एतेन, प्रवृत्तिहेतुचिकीर्षायां बलवदनिष्टानुबन्धित्वज्ञानं प्रतिबन्धकमिति तदभावः स्वरूपसन्नेव प्रवृत्तौ

121. एवञ्च (का. आ.)

122. पाकादेः (ब. कृ.)

## बलवदनिष्टाननुबन्धित्वस्य [123] विध्यर्थप्रवेशः ।

विवरणम्

हेतुः न तु बलवदनिष्टाननुबन्धित्वज्ञानमिति प्रवर्तकज्ञानाविषयत्वान्न बलवदनिष्टाननुबन्धित्वस्य लिङर्थत्वमावश्यकमिति दूषणं परास्तं वेदितव्यम् । तस्याप्रवर्तकत्वेऽपि न कलञ्जं भक्षयेदिति वाक्यप्रामाण्योपपादनाय तदावश्यकत्वात् । वस्तुतस्तु बलवदनिष्टाननुबन्धित्वज्ञानमेव प्रवर्तकमित्यग्रे स्फुटीभविष्यति ।

इदन्तु बोध्यम् । नञ्समभिव्याहारे क्वचित् चैत्यं न वन्देतेत्यादौ लिङर्थस्येष्टसाधनत्वस्याभावो बोध्यते । न कलञ्जमित्यादौ च लिङर्थस्य बलवदनिष्टाननुबन्धित्वस्याभावो बोध्यते । नातिरात्रे षोडशिनं गृह्णातीत्यत्र धात्वर्थान्वितनञर्थाभावे लिङर्थेष्टसाधनत्वं बोध्यते । न ह्यत्र धात्वर्थे इष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वस्य वा अभावः बोधयितुं शक्यते । अतिरात्रे षोडशिनं गृह्णातीति विधिना तयोस्तत्र बोधितत्वेन तदभावस्य बाधितत्वात् । षोडशिग्रहणे तदभावे च इष्टसाधनत्वस्य विधिनिषेधवाक्याभ्यां बोधनाद्विकल्पः सिद्ध्यति । स्पष्टश्चायमर्थः नञ्वाददीधितौ इति ।

विध्यर्थप्रवेशः — लिङर्थतास्वीकारः ।

न चेष्टसाधनत्वमात्रस्य लिङर्थत्वेऽपि न कलञ्जं भक्षयेदित्यादौ नञ्समभिव्याहृतलिङः अनिष्टसाधनत्वे लक्षणास्वीकारेणैव तद्वाक्यप्रामाण्यनिर्वाहे बलवदनिष्टाननुबन्धित्वस्य लिङर्थतास्वीकारो न युक्त इति

123. विध्यर्थे प्रवेशः (ब.) विध्यर्थत्वप्रवेशः (कृ.)

**निषिद्धेऽपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वसत्त्वेन तदभावस्य नञा बोधने प्रामाण्यानुपपत्तेः । बलवदनिष्टाननुबन्धित्वस्य**

विवरणम्

वाच्यम् । न विधौ परः शब्दार्थः इत्युक्तेः विधिस्थले लक्षणाकल्पनस्यायुक्तत्वात् । किञ्च वायव्यं श्वेतमालभेत इति हिंसाविधेः न हिंस्यात्सर्वा भूतानीति निषेधशास्त्रस्य च विरोधपरिहाराय न हिंस्यादित्यत्र हनधातोः विहितेतररागप्राप्तहिंसापरतया संकोच आश्रितः दार्शनिकैः । तच्चासमञ्जसं स्यात् । तृप्त्यादिरूपेष्टसाधनस्य कलञ्जभक्षणादेः नरकादिरूपबलवदनिष्टानुबन्धित्वेन, इष्टसाधनत्वस्य बलवदनिष्टानुबन्धित्वस्य च विरोधाभावात्, हिंसायामिष्टसाधनताबोधकस्य वायव्यं श्वेतमालभेत इति विधेः तत्रानिष्टसाधनत्वबोधकनिषेधशास्त्रस्य च विरोधस्यैवाभावात् । अतः लिङा बलवदनिष्टाननुबन्धित्वबोधनमावश्यकम् । एवञ्च विधिना तत्र बलवदनिष्टाननुबन्धित्वस्य, निषेधेन तद्विरुद्धस्य तदभावस्य च बोधेन विरोधात् संकोच आश्रीयते इति समञ्जसम् । अपि च इष्टसाधनत्वमात्रस्य लिङर्थत्वे तृप्तिकामः कलञ्जं भक्षयेदिति वाक्यस्य प्रामाण्यापत्तिः इष्टसाधनत्वस्य तत्राबाधात् । बलवदनिष्टाननुबन्धित्वस्यापि लिङर्थत्वे तु बाधितस्य बलवदनिष्टाननुबन्धित्वस्य कलञ्जभक्षणे बोधनादप्रामाण्यं तद्वाक्यस्य निर्वहतीति बोध्यम् ।

**तदभावस्य नञा बोधने प्रामाण्यानुपपत्तेरिति ।** न च प्रत्यवायाभावरूपेष्टसाधनत्वाभावः कलञ्जभक्षणे अबाधितो बोध्यते । तेन च प्रत्यवायसाधनत्वाक्षेपात्पुरुषः कलञ्जभक्षणान्निवर्तते इति वाच्यम् । प्रत्यवायाभावनिरूपितं साधनत्वं क्षेमसाधारणमेव वक्तव्यम् । तच्च

**विधित्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्तत्कर्मण्यबाधितो बोध्यते इति तत्प्रामाण्योपपत्तिः ।**

**बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भानम् । सोऽपि [124] विशेषणाभावायत्तः अबाधितः कलञ्जभक्षणादौ । विशिष्टाभावबोधानन्तरमेव**

विवरणम्

नित्यकर्मणामेव । तदभावे प्रत्यवायोत्पत्तेः तत्करणे प्रत्यवायाभावस्य च सत्त्वात् । अकरणे प्रत्यवायाभावात्काम्ये यागादौ न निरुक्तं प्रत्यवायाभावसाधनत्वम् । एवञ्च तदभाववति काम्ये प्रत्यवायसाधनत्वाभावेन व्यभिचारात् प्रत्यवायसाधनत्वाक्षेपासंभवात् निषेधविधेः निवर्तकत्वं न स्यात् । अतश्च बलवदनिष्टाननुबन्धित्वस्य लिङर्थतास्वीकार आवश्यक इति भावः ।

**तस्यैवेति** । एवेन इष्टसाधनत्वस्य व्यवच्छेदः ।

सोऽपि — बलवनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावोऽपि ।

विशेषणाभावायत्तः — बलवदनिष्टाननुबन्धित्वाभावप्रयुक्तः ।

ननु बलवदनिष्टानुबन्धित्वज्ञानमेव निवर्तकम् । तच्च न निषेधवाक्याज्जातमिति कथं तद्वाक्यस्य निवर्तकत्वमित्यत आह— **विशिष्टाभावेति** ।

124. विशेषणाभावो यतः (ब. कृ.)

**तल्लिङ्गकानुमानगम्यः बलवदनिष्टानुबन्धित्वरूपः तदननुबन्धित्वाभावः । प्रवर्तकमिव निवर्तकमपि ज्ञानं श्रुतिवाक्यात् परम्परयैव न तु साक्षात् ।**

विवरणम्

**तल्लिङ्गकानुमानेति** । कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववत्, इष्टसाधनत्वे सति बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववत्त्वात् इत्यनुमानाकारो बोध्यः ।

ननु तर्हि निषेधवाक्यजन्यस्य ज्ञानस्य साक्षान्निवर्तकत्वं न स्यात् इत्यत्रेष्टापत्तिमाह — **प्रवर्तकमिवेति** । प्रवृत्तिकारणस्य कालविशेषपुरुषविशेषविशेषितेष्टसाधनताज्ञानस्य विधिवाक्यजन्यबोधानन्तरमेव जायमानत्वादिति भावः ।

अत्र "प्रवर्तकमिति । यथा यजेतेत्यादौ श्रुतिवाक्यात् इष्टसाधनताज्ञानं तेन च चिकीर्षारूपं प्रवर्तकं ज्ञानं जायते । न तु साक्षात् श्रुतिवाक्यात् । तथा न भक्षयेदित्यादावपि श्रुतिवाक्यात्तु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावज्ञानं जायते । तेन च द्विष्टसाधनत्वादिज्ञानरूपं निवर्तकं ज्ञानं जायते न तु साक्षात् श्रुतिवाक्यादित्यर्थः" (६३६-पृ) इत्यादर्शः । चिकीर्षाद्वारा विधिवाक्यजन्येष्टसाधनताज्ञानस्य प्रवर्तकत्वेऽपि चिकीर्षाया इच्छायाः ज्ञानरूपत्वाभावात् चिकीर्षारूपं प्रवर्तकं ज्ञानं जायते इति विवरणमत्यन्ताशुद्धम् । परन्तु इदानीं इदं ममेष्टसाधनमिति ज्ञानेनैव प्रवर्तते । श्रुतिवाक्यात् सामान्यतः इष्टसाधनत्वमेव बुध्यते । तदनन्तरं कालविशेषपुरुषविशेषविशेषितेष्टसाधनताज्ञानं, ततः प्रवृत्तिरिति प्रवर्तकं ज्ञानं विधिवाक्यजन्यज्ञानजन्यमिति प्रवर्तकमिवेति ग्रन्थाशयो बोध्यः ।

**वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात्**

विवरणम्

"नापि नञर्थाभावस्य बलवदनिष्टाननुबन्धित्वविशेषणत्वं संभवति। बलवदनिष्टाननुबन्धित्वस्य तदर्थैकदेशत्वात् पदार्थः पदार्थेनान्वेति न तदेकदेशेनेति व्युत्पत्तिविरोधादिति नोक्तमते बलवदनिष्टाननुबन्धित्वाभावस्य शाब्दबोधे भानं संभवति" (६३६ पृ.) इत्यादर्शः। नञर्थाभावस्य लिङर्थैकदेशे बलवदनिष्टाननुबन्धित्वाभावे प्रतियोगितासंबन्धेनान्वये बलवदनिष्टाननुबन्धित्वाभावो न लभ्यते। न भक्षयेदित्यत्र वाक्यार्थोऽपि न वर्णयितुं शक्यते। अभावप्रतियोगिबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य धात्वर्थे कलञ्जभक्षणे बाधितत्वेन बोधयितुमशक्यत्वात्। तस्मान्नञर्थाभावस्य बलवदनिष्टाननुबन्धित्वविशेषणतया भानस्य, एकदेशानन्वयव्युत्पत्तिविरोधेन खण्डनं प्रकृतानुपयुक्तमेव। परन्तु इष्टसाधनत्वविशेषणतयोपस्थितस्य बलवदनिष्टाननुबन्धित्वस्य नञर्थे अन्वयः न संभवतीत्यत्र हेतुः एकत्र विशेषणतयोपस्थितस्यान्यत्र स्वातन्त्र्येण विशेषणतया अन्वयो नेति व्युत्पत्तिविरोधः वर्णनीयः। स चादर्शे नोक्तः। बलवदनिष्टाननुबन्धित्वस्येष्टसाधनत्वविशेषणतयोपस्थितत्वे हेतुतया पदार्थैकदेशतयेति भट्टाचार्यैरभिहितम्। न त्वत्र पदार्थः पदार्थेनान्वेति न तदेकदेशेन इति व्युत्पत्तिविरोधोऽभिमत इति बोध्यम्।

वक्ष्यमाणगौरवमभिप्रेत्याह — **वस्तुत इति।**

**विशिष्टशक्तौ** — विशिष्टे इष्टसाधनत्वे लिङः शक्तिस्वीकारे।

**विनिगमनाविरहादिति।** तथा च बलवदनिष्टाननुबन्धित्वविशिष्टे इष्टसाधनत्वे, इष्टसाधनत्वविशिष्टे बलवदनिष्टाननुबन्धित्वे

पृथगेव बलवदनिष्टाननुबन्धिताया वाच्यत्वम् ।

विवरणम्

च गुरुभूते शक्तिद्वयकल्पनामपेक्ष्य, बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वे च पृथगेव शक्तिस्वीकार उचित इति भावः ।

**पृथगेव** — स्वातन्त्र्येण इष्टसाधनत्वाविशेषणतयेति यावत् । इत्थञ्चात्र पक्षे लिङर्थस्य बलवदनिष्टाननुबन्धित्वस्य स्वातन्त्र्येणोपस्थितेः नञर्थाभावविशेषणतया अन्वयः संभवति । एकत्रेति व्युत्पत्तिविरोध-विरहादिति निवर्तकं ज्ञानं शाब्दबोधरूपमेवेति बोध्यम् । पृथक्शक्तिपक्षे न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टाननुबन्धित्वस्यैव लिङ्तात्पर्यविषयतया तदभाव एव धात्वर्थे बुध्यते । नत्विष्टसाधनत्वमपि ।

एतेन निषेधस्थलेऽपि लिङा इष्टसाधनत्वस्य धात्वर्थे बोधनात्, तस्य च लोकावगततृप्तिरूपेष्टसाधनत्वरूपत्वे श्रुतेर्वैयर्थ्यापत्तिः। अतः विश्वजिन्न्यायेन स्वर्गरूपेष्टसाधनत्वमेव तेन बोधनीयमिति निषिद्धानां स्वर्गफलकत्वापत्तिः । न च तेषां स्वर्गजनकत्वे बलवदनिष्टाननुबन्धित्वाभावो न संभवतीति शङ्क्यम् । तदधिकस्यैव नरकस्य ततः कल्पनादिति दूषणं परास्तम् ।

तत्रेष्टसाधनत्वस्यैवाबोधात् । तदुक्तं विश्वनाथन्यायपञ्चाननैः 'तत्र बाधात् इष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः, किन्तु बलवदनिष्टा-ननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते' इति ।

अपि च, इष्टसाधनत्वस्य बोधोपगमेऽपि न निरुक्तदूषणमवकाशं लभते । तथा हि तत्रैव विश्वजिन्न्यायः प्रवर्तते, यत्र वाक्यं प्रवर्तकं

**न च बलवदनिष्टा[125]ननुबन्धित्वस्येष्टसाधनत्वविशेष्यत्वे विधिवाक्यतः क्रियाविशेष्यकेष्टसाधनताज्ञानासंभवात् क्रियागोचर-**

विवरणम्

फलञ्च न श्रुतम् । तत्र हि इष्टसाधनताज्ञानं विना प्रवृत्तेरनुपपत्तेः प्रवर्तकत्वनिर्वाहाय सर्वाभिलषितः स्वर्गः फलं कल्प्यते । न चेदं न कलञ्जमिति वाक्यं कलञ्जभक्षणे प्रवर्तकमिति कश्चिदभ्युपैति । न वा तस्य फलं तृप्त्यादिकमनवगतम् । नापि तस्य स्वर्गः फलमिति कल्पनं युक्तम् । बहुवित्तव्ययायाससाध्यस्य हि कर्मणः नाल्पं फलं भवितुमर्हतीति स्वर्गः फलं कल्प्यते । अत एव अल्पायाससाध्यसन्ध्यावन्दनादेः विश्वजिन्न्यायेन स्वर्गः फलं न भवितुमर्हतीति अनुपदमेवाभिहितं भट्टाचार्यैः मीमांसकमतनिरूपणावसरे । न चेदं कलञ्जभक्षणं बहुपरिश्रमसाध्यं कर्म । तस्मान्नात्र विश्वजिन्न्यायस्यावसरः । लोकावगततृप्तिसाधनत्वबोधकत्वे च न श्रुतेर्वैयर्थ्यम् । लोकावगतानां बहूनां वेदे प्रतिपादनदर्शनात् । परन्तु ऐदम्पर्येण लोकानवगत एवार्थो विधेयतया श्रुत्या प्रतिपाद्यते । एवञ्चास्माद्वाक्यात् तृप्तिसाधनत्वस्य कृतिसाध्यत्वस्य च लोकावागतस्यैव बोधेऽपि लोकानवगतः बलवदनिष्टाननुबन्धित्वाभावः नरकसाधनत्वपर्यवसितः विधेयतया बोध्यते इति न वाक्यस्य वैयर्थ्यं संभवति ।

बलवदनिष्टाननुबन्धित्वस्य इष्टसाधनत्वविशेषणतया लिङ्वाच्यत्वे विनिगमकं शङ्कते— **न चेति** ।

125. अननुबन्धित्वे इष्टसाधनत्वस्य (ब.) अननुबन्धित्वेष्टसाधनत्व (कृ.)

**चिकीर्षाद्यर्थं विधिवाक्यजशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रिया-विशेष्यकज्ञानान्तरं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वस्य विशेषणत्वे विनिगमकमिति वाच्यम् । क्रियायां बलवदनिष्टासाधनत्वज्ञानस्यापि तद्गोचरेच्छाहेतुतया बलव-**

विवरणम्

**क्रियाविशेष्यकज्ञानान्तरमिति ।** मानसमिति शेषः ।

**तदकल्पनप्रयुक्तलाघवमेवेति** । विधिवाक्यजन्यबोधस्यैव क्रिया-विशेष्यकेष्टसाधनत्वप्रकारकत्वादिति भावः ।

विशेषणत्वे — विशेषणतया वाच्यत्वे ।

शङ्कारीत्यैव विनिगमकविरहमुपपाद्य शङ्कां निरस्यति **क्रियायामित्या-दिना ।**

**बलवदनिष्टाननुबन्धित्वज्ञानस्यापि तद्गोचरेच्छाहेतुयेति ।** न चास्तिककामुकः नरकसाधनत्वं जानान एवागम्यागमने प्रवर्तते । इत्थञ्च अनिष्टाननुबन्धित्वज्ञानाभावेऽपि चिकीर्षया अगम्यागमनादावास्तिककामुकस्य प्रवृत्तेर्दर्शनाद्व्यभिचारेण न बलवदनिष्टाननुबन्धित्वज्ञानस्य चिकीर्षाहेतुतेति वाच्यम् । यतः आस्तिककामुकस्य अगम्यागमने प्रवृत्तिवेलायां तज्जन्यनरके न बलवान्द्वेषोऽस्ति । तज्जन्यसुखे उत्कटेच्छया तत्र द्वेषप्रतिबन्धात् । न च यत्रोत्कटरागः तत्रैव नोत्कटः द्वेषस्तदा । एवञ्चागम्यागमनजन्यसुखे उत्कटेच्छा तत्रैव द्वेषं प्रतिबध्नाति न तु नरके इति वाच्यम् । सुखविशेष-विषयकोत्कटरागघटिता तदुपायागम्यागमनगोचरोत्कटरागसामग्री तत्रेव

दनिष्टासाधनत्वस्येष्टसाधनत्वविशेषणत्वमते क्रियाविशेष्यकतत्प्रकारक-ज्ञानान्तरस्य कल्पनीयतया मतद्वये कल्पना[126] साम्यात् ।

विवरणम्

तज्जन्यतया ज्ञाते फलान्तरे नरकेऽपि द्वेषं प्रतिबध्नाति । स्फुटीकरिष्यन्ति चेममर्थमनुपदमेव भट्टाचार्याः । एवञ्च तदानीं नरके तस्य बलवद्द्वेषाभावेन तदीयं नरकसाधनताज्ञानं न तदीयबलवद्द्वेषविषयानुबन्धित्वज्ञानरूपमिति निरुक्ताननुबन्धित्वज्ञानादेव सोऽपि प्रवर्तते इति व्यभिचारविरहेण तद्धेतुताया निरपवादत्वात् । न च चिकीर्षायां प्रवृत्तौ वा बलवद्द्वेषः प्रतिबन्धकः तदभावेनान्यथासिद्धत्वान्न बलवदनिष्टाननुबन्धित्वज्ञानं हेतुरिति वाच्यम् । कारणताग्राहकयोः स्वतन्त्रान्वयव्यतिरेकयोः सत्त्वेन बलवदनिष्टाननुबन्धित्व-ज्ञानस्य हेतुत्वे सिद्धे तेनैव द्वेषाभावस्यान्यथासिद्धेर्वक्तुं शक्यत्वात् ।

द्वेषाभावस्य हेतुतावादिभिरपि आस्तिककामुकस्यागम्यागमने प्रवृत्तिः उक्तरीत्या नरकस्य तात्कालिकबलवद्द्वेषाविषयत्वादेवोपपादनीया । कथ-मन्यथा द्वेषहेतोः द्विष्टनरकसाधनताज्ञानस्य सत्त्वात्तत्र कुतो न द्वेषः । तस्माद्बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वमनपवादमिति बोध्यम् ।

तत्प्रकारकज्ञानान्तरस्य — बलवदनिष्टाननुबन्धित्वप्रकारकस्य शाब्द-बोधातिरिक्तस्य मानसज्ञानस्य ।

मतद्वये — बलवदनिष्टासाधनत्वस्य इष्टसाधनत्वविशेषणतया लिङ्-वाच्यत्वमते, तद्विशेष्यतया वाच्यत्वमते चेत्यर्थः ।

126. साम्यता (ब. कृ.)

**यदि च बलवदनिष्टसाधनत्वज्ञानमेव द्वेषसामग्रीत्वेनेच्छाप्रतिबन्धकं न तु तदसाधनत्वज्ञानमिच्छाहेतुः ।**

विवरणम्

बलवदनिष्टाननुबन्धित्वज्ञानाभावेऽपि असति बलवदनिष्टानुबन्धित्वज्ञाने, इष्टसाधनताज्ञानेन चिकीर्षोत्पत्त्या प्रवृत्तिरानुभाविकीत्याशयेनाह — **यदि चेति ।**

अत्र तादृशानुबन्धित्वनिश्चयस्य प्रतिबन्धकत्वे, तदभाव, तादृशानुबन्धित्वव्याप्यवत्तानिश्चयाभाव, तादृशानुबन्धितावच्छेदकतया गृहीतधर्मवत्तानिश्चयाभावादीनां हेतुताकल्पनापत्त्या गौरवम् । तादृशाननुबन्धित्वज्ञानस्य हेतुत्वे तु निरुक्तनिश्चयानां समवधानकाले तादृशनिश्चयात्मकप्रतिबन्धकसत्त्वेन तादृशाननुबन्धित्वज्ञानस्य हेतोरभावादेव चिकीर्षाया अनुत्पत्त्या प्रवृत्त्यभावोपपादनसंभवात् तत्र तादृशनिश्चयाभावानां हेतुत्वं न कल्पनीयमिति लाघवम् ।

एवं बलवदनिष्टाननुबन्धित्वनिश्चयस्य हेतुत्वे संशयनिश्चयसाधारणाप्रामाण्यज्ञानानास्कन्दिततादृशनिश्चयत्वं कारणतावच्छेदकम् । अनुबन्धित्वज्ञानस्य प्रतिबन्धकत्वे तु अप्रामाण्यनिश्चयानास्कन्दिततादृशज्ञानत्वं प्रतिबन्धकतावच्छेदकम् । संशयनिश्चयसाधारणज्ञानप्रतिबन्धकतायां अप्रामाण्यनिश्चयस्यैवोत्तेजकत्वात् । अननुबन्धित्वनिश्चयत्वापेक्षया अनुबन्धित्वज्ञानधर्मिकाप्रामाण्यनिश्चयत्वं गुरुभूतमिति कारणतावच्छेदकलाघवादपि अननुबन्धित्वज्ञानस्य हेतुत्वं युक्तम् । न च बलवदनिष्टमरणसाधनत्वं संदिहानोऽपि युद्धे वीरः प्रवर्तते । अतः बलवदनिष्टानुबन्धित्वनिश्चय एव चिकीर्षां प्रतिबध्नाति । निश्चयस्य

तदोक्तस्य विशेष्यविशेषणभावे विनिगमकस्य संभवेऽपि

विवरणम्

प्रतिबन्धकतायां अप्रामाण्यज्ञानस्यैवोत्तेजकत्वमिति अप्रामाण्यज्ञानानास्कन्दिततादृशानुबन्धित्वनिश्चयत्वमेव प्रतिबन्धकतावच्छेदकम् । अत एव भवद्भिः बलवदनिष्टाननुबन्धित्वज्ञानसामान्यस्यैव हेतुता वक्तव्येति अप्रामाण्यनिश्चयानास्कन्दिततादृशाननुबन्धित्वज्ञानत्वं गुरुभूतं कारणतावच्छेदकमिति विपरीतमेव गौरवमिति वाच्यम् । युद्धे मरणरूपानिष्टसाधनत्वसन्देहवानपि वीरः न बलवद्द्वेषविषयानिष्टसाधनत्वं संदिग्धे । मरणे तदा तस्य बलवद्द्वेषाभावात् । अत एवोद्बन्धनादावपि प्रवर्तमानः पुरुषो दृश्यते। तस्माद्बलवदनिष्टाननुबन्धित्वनिश्चयवानेव युद्धे प्रवर्तते । इत्थञ्च बलवदनिष्टाननुबन्धित्वनिश्चयस्यैव हेतुतया निरुक्तसरण्या कारणतावच्छेदकलाघवमक्षतम् । एवं बलवदनिष्टाननुबन्धित्वज्ञानस्य चिकीर्षाहेतुत्वमते, पाकविशेष्यकबलवदनिष्टाननुबन्धित्वप्रकारकज्ञानाभाववानहमिति मानसंग्रहे पाकचिकीर्षासामग्र्याः प्रतिबन्धकत्वं न कल्पनीयमिति लाघवम् । पाकचिकीर्षासामग्रीकाले पाके बलवदनिष्टाननुबन्धित्वज्ञानमवश्यं तिष्ठति । तस्य च स्वरूपसतः तादृशज्ञानाभावबुद्धौ विरोधित्वस्य क्लृप्तत्वात् । अनुबन्धित्वज्ञानस्य प्रतिबन्धकत्वे तु तदभावघटितचिकीर्षासामग्र्याः प्रतिबन्धकत्वमतिरिक्तं कल्पनीयमिति गौरवमित्याशयेन यदीत्युक्तम् ।

उक्तस्य विशेष्यविशेषणाभावे विनिगमकस्य — इष्टसाधनत्वस्य विशेष्यतया लिङ्वाच्यत्वे, क्रियाविशेष्यकेष्टसाधनत्वप्रकारकस्य ज्ञानान्तरस्याकल्पनप्रयुक्तलाघवरूपाविनिगमकस्य ।

**विशिष्टस्य वाच्यत्वे श्येने [127] विध्यर्थबाधेन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यकः ।**

**मणिकृतापि तत्र [128] बलवदनिष्टासाधनत्वस्याभानं लिखितम् ।**

विवरणम्

विध्यर्थबाधेन — वैरिवधसाधनश्येनस्य नरकप्रयोजकतया बलवदनिष्टाननुबन्धित्वबाधप्रयुक्तेन विशिष्टेष्टसाधनत्वबाधेन ।

तद्विधायकश्रुतेः — श्येनविधायिकायाः श्येनेनाभिचरन्यजेत इति श्रुतेः ।

शक्तिभेदस्य — बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वे च लिङः शक्तिभेदस्य ।

**केवलेष्टसाधनताबोधस्येति ।** बलवदनिष्टाननुबन्धित्वासहितत्वं इष्टसाधनतायां कैवल्यम् । एवञ्च श्येनेनेत्यत्र तृतीयार्थाभेदस्य धात्वर्थे अन्वयात् वैरिवधरूपेष्टसाधनश्येनसंज्ञकाभिन्नयागकृतिमान् वैरिवधकामः इति श्रुतिजन्यबोधः फलितः ।

निरुक्तश्रुतेः केवलेष्टसाधनत्वबोधे मणिकृत्संमतिमाह — **मणिकृतापीति ।**

127. विध्यर्थवाच्येन (ब.) विध्ययवादन (कृ.)

128. विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तत्र (ब. कृ.)

**तद्भानं विशिष्टशक्तिपक्षे न संभवति विशिष्टशक्तेर्विशेषणविनिर्मोकेन विशेष्यांशाभासकत्वात् । तत्तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य हेतुत्वात् । अन्यथा [129] विशिष्टसुखादिवाचकस्वर्गादिपदाद्विना लक्षणां केवल-सुखत्वादिप्रकारकशाब्दबोधापत्तेः ।**

विवरणम्

शक्तिभेदस्यावश्यकत्वं विवृणोति — **तद्भानमिति** ।

विशेषणविनिर्मोकेण — विशेषणमविषयीकृत्य ।

विशेष्यांशाभासकत्वादित्युक्तस्योपपादकं कार्यकारणभावमाह — **तत्तद्धर्मप्रकारेणेति** ।

**शक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य हेतुत्वादिति** । विशिष्टशक्तिपक्षे अभ्रान्तस्य केवलेष्टसाधनत्वत्वे लिङ्पदशक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्यासंभवात् केवलेष्टसाधनत्वबोधो न संभवतीति भावः ।

**विशिष्टसुखादिवाचकेति** । दुःखासंभिन्नत्वादिविशिष्टसुखादि-वाचकेत्यर्थः ।

विशिष्टवाचकात्पदात् विनैव लक्षणां विशेष्यमात्रशाब्दबोधः अनु-भूयते । घटादिपदात् विशेष्यं विहाय घटत्वादिविशेषणमात्रबोधस्तु

129. विशिष्टस्वर्गादिवाचक (ब. कृ. का. आ.)

यदि च केवलसुखत्वादिना स्वर्गादिरूपसुखबोधो लक्षणामन्तरेण स्वर्गादिपदादिष्यते एव । नेष्यते परं सुखान्तरबोधः तत्र शक्तिविरहादिति शक्यतावच्छेदकतापर्याप्त्यवगाहित्वमनुपयोगीत्युच्यते । तदापि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यतायां श्येननिष्ठवैरिवधसाधनत्वस्य बलवदनिष्टसाधनत्वानियत-

विवरणम्

लक्षणयैव । शाब्दप्रयोजकस्वतन्त्रोपस्थितेः शक्त्या अनिर्वाहादित्याशयेनाह — **यदि चेति** ।

स्वर्गादिरूपसुखबोधः — वस्तुतः दुःखासंभिन्नत्वादिविशिष्टं यत्सुखं तद्बोधः ।

तत्र — सुखान्तरे ।

अनुपयोगि — शाब्दबोधकारणतानवच्छेदकम् । अत्र शक्त्या प्रवृत्तिनिमित्तैकदेशं परित्यज्य बोधो नोत्पद्यते इत्यनुभवमभिप्रेत्य यदीत्युक्तम् ।

तदसाधनत्वविशिष्टत्वेन विधिप्रत्ययावाच्यतया — तदसाधनत्वविशिष्टत्वावच्छिन्नं यद्विधिप्रत्ययवाच्यत्वं तदभाववत्तया ।

**त्वेन तदसाधनत्वविशिष्टत्वेन विधिप्रत्ययावाच्यतया सुतरां तत्र विध्यर्थत्वानिर्वाह एव ।**

विवरणम्

तत्र - श्येननिष्ठवैरिवधसाधनत्वे ।

**अनिर्वाह एवेति** । तथा च विशिष्टशक्तिपक्षे श्येने विना लक्षणां केवलेष्टसाधनत्वबोधो न संभवतीति खण्डशक्तिस्वीकार आवश्यक इति भावः ।

अत्र "तत्र श्येने विध्यर्थत्वं न स्यादेवेति न विशिष्टशक्तिपक्षः साधीयानित्यर्थः" (६३९-पृ) इत्यादर्शः ।

विशिष्टेष्टसाधनत्वस्यैव लिङर्थत्वेन श्येनस्य लिङर्थत्वाभावात् श्येने विध्यर्थत्वाभावापत्तौ इष्टापत्तिरेवेति नोक्तव्याख्यानं समीचीनम् । परन्तु यथा वस्तुतः दुःखासंभिन्नस्य स्वर्गसुखस्य सुखत्वेन बोधः स्वर्गपदादिष्यते । तथा अत्र बलवदनिष्टाननुबन्धित्वं परित्यज्य इष्टसाधनत्वस्य श्येने लिङा बोधो न संभवति श्येननिष्ठेष्टसाधनत्वस्य बलवदनिष्टाननुबन्धित्वसामानाधिकरण्याभावेन लिङर्थत्वाभावात् । एवञ्च तत्रेत्यस्य श्येननिष्ठे वैरिवधसाधनत्वे इत्यर्थः ।

एवञ्च न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टाननुबन्धित्वाभाववत्कलञ्जभक्षणानुकूलकृतिमानिति बोधो जायते ।

न चैवं बोधस्वीकारे चैत्रः कीदृशः इति प्रश्ने चैत्रो न कलञ्जं भक्षयेदित्युत्तरापत्तिरिति वाच्यम् । निरुक्तप्रश्नवाक्यात् चैत्रे जिज्ञासितधर्मावच्छिन्नाभेदावगाहिशाब्दबोधजननात् तस्योत्तरवाक्यमपि चैत्रे धर्मविशेषावच्छिन्नाभेदावगाहिशाब्दबोधजनकमेवोपगन्तव्यं शब्दशक्तिस्वाभाव्यात् । अत एव घटः किंजन्यः इति प्रश्ने, घटो दण्डजन्य

**यत्तु श्येनस्यादृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलवद्दुःखाजनकत्वमिति मतान्तरम्। तदसत्।**

[130]**तथा सति श्येने** [131]**सात्त्विकप्रवृत्तिवारणाय बलवद्दुःखा-**

विवरणम्

इत्येवोत्तरयन्ति। न तु घटो दण्डादिति। एवञ्च न कलञ्जं भक्षयेदिति वाक्यं चैत्रे तादृशकृत्यवच्छिन्नाभेदावगाहिशाब्दबोधाजनकत्वात् न तद्वाक्यमुत्तरं भवितुमर्हति। तादृशकृतिमांश्चैत्रः इति वाक्यन्तूत्तरं भवत्येव। न च तथापि चैत्रः किं करोतीति प्रश्ने न कलञ्जं भक्षयेदित्युत्तरापत्तिरिति वाच्यम्। जिज्ञासितधर्मावच्छिन्नविषयकवर्तमानकृतिप्रकारकस्यैव बोधस्य प्रश्नवाक्येन जनितत्वात् तादृशकलञ्जभक्षणत्वावच्छिन्नविषयकवर्तमानकृतिप्रकारकबोधजनकस्यैवोत्तरत्वं संभवति न तादृशबोधाजनकस्य न कलञ्जं भक्षयेदिति वाक्यस्य। न हि लिङन्तवाक्यजन्यबोधे कृतौ वर्तमानत्वं भासते तद्भासकाभावादिति बोध्यम्।

श्येनस्य बलवदनिष्टाननुबन्धित्वमुपपाद्य, श्येनेनाभिचरन्यजेतेत्यत्र बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वबोधं स्वीकुर्वतः विशिष्टेष्टसाधनत्वे लिङः शक्तिवादिनो मतं दूषयितुमुपन्यस्यति — **यत्त्विति**।

**अदृष्टाद्वारकत्वघटितेति**। काशीमरणायानुष्ठितशिवपूजादेः हिंसात्ववारणाय अदृष्टाद्वारकमरणानुकूलव्यापारत्वस्यैव हिंसालक्षणत्वं स्वीकर्तव्यमिति भावः।

130. तथाहि (का. आ.)

131. तान्विकप्रवृत्ति (ब. कृ.)

**प्रयोजकत्वज्ञानस्यैव प्रवृत्तिहेतुताया उपगन्तव्यतया तस्यैव विध्यर्थताया आवश्यकत्वेन श्येने तद्बाधात् श्रुतेरप्रामाण्यप्रसङ्गतादवस्थ्यात् । श्येनस्य हिंसात्वविरहेऽपि अभिचारतया नरकजनकत्वस्य दुर्वारत्वाच्च ।**

विवरणम्

**तस्यैव विध्यर्थताया इति** । प्रवृत्तिहेतुज्ञानविषयस्यैव लिङर्थत्वादिति भावः ।

**श्येने तद्बाधादिति** । श्येनजन्यवैरिवधस्य हिंसात्वात् तेन नरकजननात् नरकप्रयोजकत्वमेव श्येने वर्तते इति भावः ।

श्येने बलवद्दुःखजनकत्वमप्युपपादयति — **श्येनस्येति** ।

नाभिचरेत वैरिम् इति श्रुत्या निषिद्धस्याभिचारकर्मणः श्येनस्य नरकसाधनत्वम् । अत एव श्येनादयः उपपातकमध्ये परिगणिताः मनुनेति भावः ।

अत्र "श्येने सात्विकप्रवृत्तिवारणाय बलवद्दुःखाजनकत्वज्ञानस्यैव प्रवृत्तिहेतुत्वं स्वीकार्यं श्येने बलवद्दुःखाजनकत्वं नास्तीति बाधितार्थप्रतिपादकत्वेन श्येनश्रुतेरप्रामाण्यापत्तिः स्यादेवेत्यर्थः । ननु श्येने बलवद्दुःखाजनकत्वं मयोक्तमेवेति कथं तत्र विध्यर्थभूतस्य बलवद्दुःखाजनकत्वस्य बाधः स्यादित्याशङ्क्याह — **श्येनस्येति** ।

श्येनस्य स्वरूपेण हिंसारूपत्वाभावेऽपि अभिचारतया — हिंसासाधनत्वेन नरकजनकत्वमस्त्येवेति तद्वाक्यस्याप्रामाण्यं स्यादेवेत्यर्थः" (६४०-पृ) इत्यादर्शः । अदृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्तत्वेन श्येनस्य

यत्तु अभिचरन् इत्यस्य वैरिवधगोचरप्रबलकामनाविशिष्टार्थक-

विवरणम्

बलवद्दुःखाजनकत्वमित्याक्षेपे, विना हेतूपन्यासं बलवद्दुःखाजनकत्वस्य बाधादिति समाधानमसङ्गतम् । किञ्च बलवद्दुःखाजनकत्वज्ञानस्य प्रवृत्तिकारणत्वस्वीकारेण कथं श्येने सात्विकप्रवृत्तिर्वारिता भवति । श्येनस्य हिंसात्वाभावेन न हिंस्यादिति निषेधाविषयतया बलवद्दुःखाजनकत्वात् ।

वस्तुतः मूले सात्विकप्रवृत्तिवारणाय बलवद्दुःखाप्रयोजकत्वज्ञानस्येति लेखनात् श्येनस्य हिंसात्वाभावेऽपि श्येनजन्यवैरिवधस्य हिंसात्वेन नरकसाधनत्वात् श्येने बलवद्दुःखप्रयोजकत्वमस्तीति तदभावरूपलिङर्थ-बाधः । श्येने बलवद्दुःखाप्रयोजकत्वज्ञानाभावान्न सात्विकप्रवृत्तिरित्यपि सम्यगुपपद्यते । बलवद्दुःखाजनकत्वस्य विध्यर्थत्वेऽपि श्येने तद्बाधः श्येनस्येति ग्रन्थेनाभिहितः । एतेन, दुःखाप्रयोजकत्वमिति मूलपाठानालोचन-निबन्धनं, ननु श्येने इत्यादिना श्येनस्येत्यादिग्रन्थावतरणमपि परास्तं वेदितव्यम् । अपि च अभिचारतयेत्यस्य हिंसासाधनतयेति व्याख्यान-मप्यशुद्धम् । हिंसाया एव नरकसाधनतया तत्साधनश्येनस्य नरकजनक-त्वाभावात् । परन्तु अभिचारतयेत्यस्य अभिचारकर्मविधयेत्यर्थः । इत्थञ्च श्येनस्य हिंसात्वाभावेऽपि नाभिचरेत वैरिमिति निषेधेन अभिचारकर्मणः श्येनस्य निषिद्धत्वेन नरकजनकत्वादित्यर्थः इति विभावनीयम् ।

नरकसाधनस्यापि श्येनस्य बलवद्द्वेषविषयासाधनत्वरूपं बलवदनिष्टा-ननुबन्धित्वं लिङर्थमुपपादयता विशिष्टेष्टसाधनत्वे लिङ्प्रत्ययशक्तिवादिनां पक्षमाह — यत्त्विति ।

तया तादृशकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयाजनकत्वरूप-बलवदनिष्टाननुबन्धित्वघटकद्वेषानुदयात् तादृशकामनाविशिष्टवृत्ति-बलवद्द्वेषविषयाजनकत्वं श्रुतिवाक्यात्प्रत्येतव्यम् । तच्च श्येने अबाधितमेव । वैरिवधे उत्कटरागवतस्तज्जन्यनरके बलवद्द्वेषानुत्पत्त्या तादृशनरकस्य वैरिवधोत्कटकामनाविशिष्टवृत्तिद्वेषाविषयत्वात् । नह्येकदा एकत्रावर्तमानयोरेकतरमपरविशिष्टवृत्तीति मिश्राणां मूलाभिप्रायवर्णनम् ।

विवरणम्

कामनायां प्राबल्यं, द्वेषे बलवत्त्वञ्च वैजात्यरूपं बोध्यम् ।

**द्वेषानुदयादिति** । समभिव्याहृतप्रथमान्तपदार्थवृत्तिबलवद्द्वेषविषयाजनकत्वमेव लिङा बोध्यते इति भावः ।

एकतरं — नरके बलवद्द्वेषः ।

अपरविशिष्टवृत्ति — वैरिवधगोचरोत्कटकामनाविशिष्टवृत्तिः ।

अत्र "मूलाभिप्रायवर्णनम्—श्रुतिवाक्याभिप्रायवर्णनम्" (६४१-पृ) इत्यादर्शः । श्रुतेः सर्वमूलत्वेऽपि नात्र मूलशब्देन श्रुतिर्विवक्षितेति वक्तुं युक्तम् । यतः मिश्राः मणिग्रन्थव्याख्यातारः। मूले मणौ श्येने बलवदनिष्टाननुबन्धित्वप्रतिपादनपरोऽपि ग्रन्थोऽस्ति । तस्य मूलस्याभिप्रायः यत्त्वित्यादिरीत्या मिश्रैर्वर्णितः भट्टाचार्यैरनूदितः । मिश्राणां मूलाभिप्रायवर्णनमिति ग्रन्थादयमेवार्थः स्वरसतः प्रतीयते इति बोध्यम् ।

**तदपि न । बलवद्द्वेषविषयदुःखजनकत्वप्रतियोगिकाभावस्यातिप्रसक्ततया बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावस्य वाच्यतास्वीकारे[132] पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य प्रत्ययासंभवात् । तादृशदुःखजनकत्वे अभावे च खण्डशक्तिस्वीकारे विशिष्टशक्तिस्वीकारपरित्यागात् ।**

विवरणम्

**अतिप्रसक्ततयेति**—तादृशदुःखजनकत्ववत्यपि तादृशजनकत्वगगनोभयाभावस्य सत्त्वेन कलञ्जं भक्षयेदिति वाक्यानामपि प्रामाण्यापत्तिरिति भावः ।

**प्रत्ययासंभवादिति** । वैरिवधगोचरप्रबलकामनाविशिष्टपुरुषवृत्तिबलवद्द्वेषविषयदुःखजनकत्वाभावस्य बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावरूपत्वाभावादिति भावः ।

ननु बलवद्द्वेषविषयदुःखजनकत्वमभावश्च लिङर्थः । जनकत्वस्य तादृशपुरुषनिष्ठतादृशद्वेषविषयदुःखजनकत्वत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन अपरतदर्थे अभावे अन्वयः । तथा चातिप्रसङ्गोऽपि नास्ति विवक्षितबोधोऽप्युपपद्यते इत्यत आह — **तादृशदुःखजनकत्वे इति** ।

**विशिष्टशक्तिस्वीकारपरित्यागादिति** । खण्डशक्तिविद्वेषेणैव श्येने बलवदनिष्टाननुबन्धित्वोपपादनस्यारब्धत्वादिति भावः ।

अत्र "तत्र चान्यपुरुषस्यान्यपुरुषीयबलवद्द्वेषविषयदुःखजनकत्वाभावज्ञानं न संभवतीति नान्यपुरुषीयबलवद्द्वेषविषयदुःखाजनकत्वेऽप्येका विधिप्रत्ययस्य शक्तिः संभवति । तस्मात् तादृशदुःखजनकत्वे अभावे च

132. स्वीकारेणान्यपुरुषस्य (का. आ.)

विवरणम्

खण्डशक्तिरेव स्वीकार्या । तथा च विशिष्टशक्तिपक्षपरित्यागः गले पतित एव" (६४१-पृ) इत्यादर्शः । वैरिवधगोचरप्रबलकामनावत्पुरुषवृत्तिद्वेषविषयदुःखं न जनयति इति वाक्यादिव समभिव्याहृतपदोपस्थापितफलगोचरप्रबलकामनाविशिष्टपुरुषवृत्तिबलवद्द्वेषविषयदुःखाजनकत्ववाचकात् विधिप्रत्ययात् तादृशार्थशाब्दबोधे न किमपि बाधकं दृश्यते । न ह्यपूर्ववत् निरुक्तजनकत्वाभावः अत्यन्तमज्ञातः येनाज्ञाते तत्र विधिप्रत्ययस्य शक्तिग्रह एव न स्यात् । अपि च तस्मादित्यनेन एतद्दोषपरिहाराय तादृशदुःखजनकत्वे अभावे च खण्डशक्तिः स्वीकृता । तच्च नोपपद्यते । अन्यपुरुषेण अन्यपुरुषीयबलवद्द्वेषविषयदुःखजनकत्वस्यापि ज्ञातुमशक्यत्वेन तद्दोषतादवस्थ्यात् । तस्मात् 'वाच्यतास्वीकारेणान्यपुरुषस्य' इति न समीचीनः पाठः । अपि तु 'वाच्यतास्वीकारे पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य प्रत्ययासंभवात्' इति पाठः । पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य दुःखजनकत्वविशेषाभावस्य बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावत्वानाक्रान्तत्वात् विधिप्रत्ययतो बोधः न संभवतीति तदर्थः । तादृशदुःखजनकत्वे अभावे च खण्डशक्तिस्वीकारे निरुक्तविशेषाभावबोधः संभवति । दुःखजनकत्वस्य समभिव्याहृतपदोपस्थापितवैरिवधगोचरप्रबलकामनाविशिष्टपुरुषवृत्तिबलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन अपरस्मिन् लिङर्थे अभावे अन्वयसंभवादित्याशयेन खण्डशक्तिपक्षः आश्रितः इति सर्वं समञ्जसम् ।

एवं यत्रोत्कटरागो यदा तत्रैव नोत्कटद्वेषस्तदा । तज्जन्ये फले उत्कटरागदशायाञ्च तज्जन्यदुःखरूपफलान्तरे उत्कटद्वेषे न किञ्चिद्बाधकमिति वैरिवधे उत्कटरागदशायां श्येनजन्यनरके बलवद्द्वेषो दुरपवाद एव ।

अस्तु वा [133]फलविषयोत्कटरागघटिता उपायगोचरोत्कटरागसामग्री तत्रैव तज्जन्यतया ज्ञाते[134] फलान्तरेऽप्युत्कटद्वेषविरोधिनी । तथापि नरकवैरिवधयोरेकतरं प्रति श्येनस्य हेतुत्वाग्रहदशायां तयोर्बलवद्द्वेषरागयोर्युगपत्संभव एव ।

विवरणम्

विशिष्टशक्तौ नास्माकमाग्रहः परन्तु श्येनस्य बलवदनिष्टाननुबन्धित्वोपपादने एव इति यद्युच्यते । तदा पुरुषविशेषीयबलवद्द्वेषविषयदुःखाजनकत्वस्य बाधमाह — **एवमिति** ।

उपायगोचरोत्कटरागसामग्री तज्जन्यदुःखरूपफलान्तरे द्वेषविरोधिन्येव । अत एवागम्यागमनजन्ये सुखे उत्कटरागेण, तत्र नरकसाधनत्वं जानन्नपि आस्तिककामुकः अगम्यागमने प्रवर्तते । अन्यथा तस्य तज्जन्ये नरके द्वेषसंभवेन बलवद्द्वेषविषयदुःखासाधनत्वज्ञानाभावान्न प्रवर्तेत इत्याशयेनाह — **अस्तु वेति** । तयोरिति सप्तम्यन्तम् । नरके वैरिवधे चेत्यर्थः ।

**संभव एवेति** । वैरिवधगोचरप्रबलकामनाविशिष्टपुरुषवृत्तिबलवद्द्वेषविषयदुःखजनकत्ववति तत्र तादृशजनकत्वत्वावच्छिन्नप्रतियोगिताकाभावः बाधित इति भावः ।

133. फलविशेषोत्कटराग (ब. कृ.)
134. ज्ञाने सति (ब. कृ.)

**यत्तु दीक्षाङ्गपशुघातस्य नरकासाधनतया मा हिंस्यादित्यत्रा-वैधहिंसैव विवक्षितेति श्येनस्य नरकासाधनत्वोपपादनम् । तदपि न — तावताप्यभिचारविधया तथात्वस्य दुर्वारत्वात् ।**

विवरणम्

मा हिंस्यादिति निषेधशास्त्रस्य अवैधहिंसाविषयत्वस्वीकारेण हिंसात्मकस्यापि श्येनस्य नरकासाधनत्वमुपपादयतां मतमाह — **यत्त्विति ।**

**नरकासाधनतयेति ।** हिंसासामान्यस्य विवक्षासंभवादिति शेषः ।

श्येनस्य — श्येनेनाभिचरन्यजेतेति विहितस्येति शेषः ।

अदृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्तत्वेन श्येनस्य नरकासाधनत्ववादिमते उक्तमेव दूषणं स्मारयति — **तदपि नेति ।**

तावतापि — मा हिंस्यादिति शास्त्रेण श्येनस्य नरकसाधनत्वाबोधनेऽपि ।

**अभिचारविधयेति ।** न च मा हिंस्यादिति शास्त्रस्य रागप्राप्तहिंसाविषयतयेव नाभिचरेत वैरिमित्यभिचारनिषेधश्रुतेरपि वैधभिन्नाभिचारविषयकतया सार्थक्यसंभवेन अभिचारनिषेधशास्त्रं श्येने न प्रवर्तताम् । इत्थञ्चाभिचारविधयापि श्येनस्य नरकसाधनत्वं नेति वाच्यम् ।

सर्वस्याप्यभिचारकर्मणो वैधत्वेन अवैधाभिचाराप्रसिद्ध्या अभिचारनिषेधशास्त्रस्य निर्विषयत्वापत्त्या अप्रामाण्यप्रसङ्गात् । अत एव 'अभिचारमहीनञ्च त्रिभिः कृच्छ्रैः व्यपोहति' इति प्रायश्चित्तोपदेशः संगच्छते ।

न च श्येनफलस्य वैरिवधरूपाभिचारस्यैवोपपातकत्वं प्रायश्चित्तञ्च न तु श्येनस्येति वाच्यम् । तत्र वधजनकश्येनादिकर्मण एवाभिचारपदेन

विवरणम्

विवक्षितत्वात् । अन्यथा यत्र श्येनयागकरणानन्तरं, वैरिकृतप्रत्याभिचारेण दैवाद्वैरिणो मरणेन वा शस्त्रघातादिरूपाभिचारो नोत्पन्नः तत्र श्येनकर्तुः प्रायश्चित्तं न स्यात् । इष्यते च तस्यापि प्रायश्चित्तं प्रामाणिकैः । अपि च श्येनजन्यस्याभिचारस्य निषिद्धत्वे बलवद्दुःखजनकतया तज्जनकश्येनस्य तादृशदुःखप्रयोजकत्वात् प्रवृत्त्युपयोगिनः बलवद्दुःखा-प्रयोजकत्वस्य लिङर्थस्य बाधो दुर्वार एव ।

किञ्च परस्योत्सादनार्थं यत्तत्तामसमुदाहृतम् इति वाक्यपर्यालोचनया श्येनादीनां निषेध उन्नीयते । तेनानिष्टसाधनत्वं बोध्यते । इति वेदबोधिता-निष्टसाधनताकत्वादधर्मत्वमपि श्येनस्येति प्रतिपादयद्भिः श्येनादीनामेव निषेध-स्वीकारात् तद्बोधितानिष्टसाधनत्वविरुद्धं बलवदनिष्टाननुबन्धित्वं विधिना कथं बोध्यताम् । नहीदृशनिषेधवाक्यानामपि वेदविहितश्येनाद्यतिरिक्त-विषयता स्वीकर्तुं युक्ता । वेदविहितानामेव तामसधर्मत्वात् तद्विषयत्वाच्च निरुक्तनिषेधश्रुतीनाम् । इत्थञ्च श्येनादीनां तदविषयत्वे तच्छास्त्रस्य निर्विषयत्वापत्त्या अप्रामाण्यप्रसङ्गः । तस्मात् श्येने-बलवदनिष्टाननुबन्धित्वं कथमपि न संभवतीति खण्डशक्तिमवलम्ब्य तत्र केवलेष्टसाधनत्वबोधस्वीकार एव समुचित इति भावः ।

अत्र "श्येनेतिकर्तव्यताप्रविष्टहिंसायाः नरकासाधनत्वेऽपि श्येनफली-भूतशत्रुहिंसाया नरकसाधनत्वमस्त्येवेति श्येनस्याभिचारकर्मत्वात् तथात्वं — नरकसाधनत्वं दुर्वारमेव" (६४२-पृ) इत्यादर्शः ।

विवरणम्

अत्र श्येनाङ्गपशुहिंसायाः नरकसाधनत्वमस्ति वा न वेति न विवादः। परन्तु श्येनयागस्य मरणानुकूलत्वेन हिंसात्वात् मा हिंस्यादिति निषेधेन नरकसाधनत्वमित्यत्र, श्येनस्य अदृष्टाद्वारकत्वघटितहिंसात्वानाक्रान्तत्वात् न निषेधविषयत्वमिति नरकासाधनत्वमिति पक्षः पूर्वमुपक्षिप्तः यस्त्वित्यादिना। दूषितश्च भट्टाचार्यैः। इदानीं तु श्येनस्य हिंसात्वेऽपि न निषेधविषयत्वं मा हिंस्यादिति श्रुतेः अवैधहिंसाविषयत्वात् श्येनस्य च वैधत्वात् इति न श्येनस्य नरकसाधनत्वमिति पक्षः उपक्षिप्तः।

एतेन, यस्त्वित्यादिग्रन्थविवरणावसरे श्येनजन्यहिंसापि वेदविहितेति श्येनस्यापि न नरकसाधनत्वमित्यादर्शः परास्तः। श्येनस्य विहितत्वमेव तस्य निषेधशास्त्राविषयत्वद्वारा नरकासाधनत्वोपपादकम्। न तु तज्जन्यहिंसाया वेदविहितत्वम्। अपि च श्येनफलस्य वैरिवधस्य विहितत्वमेव नास्ति। न हि यजेत स्वर्गकामः इत्यनेन स्वर्गो विधीयते इति कश्चिदभ्युपैति। नापि वैरी हन्तव्य इति विधिः श्रूयते। तस्मान्न किञ्चिदेतत्।

स चायं पक्षः, अभिचारकर्मणः श्येनस्य मा हिंस्यादिति निषेधाविषयत्वेऽपि अभिचारकर्मणां नाभिचरेत वैरिम् इति निषिद्धत्वात् नरकसाधनत्वमस्तीति, 'तावताप्यभिचारविधया तथात्वस्य दुर्वारत्वात्' इति ग्रन्थेन भट्टाचार्यैः दूषितः इति स्वरससिद्धोऽर्थः। इत्थञ्चात्र श्येनेतिकर्तव्यताप्रविष्टहिंसायाः नरकासाधनत्वोक्तिः किमर्थेति विचारणीयम्। श्येनफलहिंसायाः नरकसाधनत्ववचनेन कथं श्येनस्य नरकसाधनत्वं संभवति अन्यथासिद्धत्वात्। अभिचारविधयेति ग्रन्थश्च कथमत्रार्थे युज्यते इति सुधीभिर्विभावनीयम्।

अथ खण्डशक्तिमवलम्ब्य अनिष्टासाधनत्वविनिर्मोकेण क्वचित् [135] विधिवाक्यजन्यबोधोपगमे श्वेतं छागमालभेत इत्यादावपि तत्परित्यागसंभवात् अविरोधेन मा हिंस्यादित्यत्र श्रुत्यर्थसंकोचो न

विवरणम्

अनिष्टासाधनत्वविनिर्मोकेण—अनिष्टासाधनत्वमविषयीकृत्य ।

क्वचित्—श्येनेनाभिचरन्यजेतेत्यादौ ।

तत्परित्यागसंभवात्—अनिष्टासाधनत्वपरित्यागसंभवात् । बाधितमनिष्टासाधनत्वमविषयीकृत्य शाब्दबोधसंभवादिति यावत् ।

**अविरोधेनेति** । श्वेतं छागमालभेत इति श्रुतेः मा हिंस्यादिति श्रुत्या विरोधे सति तत्परिहारेण उभयोः प्रामाण्यसंरक्षणाय निषेधशास्त्रस्य वैधहिंसेतरपरतया संकोचः कर्तव्यः । श्रुत्योर्विरोधश्च, आलभेतेति वा—क्यजन्यबोधे अनिष्टासाधनत्वस्य आलम्भे, मा हिंस्यादिति वाक्यजन्यबोधे च हिंसात्वाक्रान्ते तस्मिन् अनिष्टसाधनत्वस्य च भाने सति संभवति । आलभेतेति वाक्यजन्यबोधे इष्टसाधनत्वमात्रभाने मा हिंस्यादिति वाक्यजन्यबोधे अनिष्टसाधनत्वमात्रभाने च न विरोधः । इष्टसाधनस्यापि कलञ्जभक्षणादेः अनिष्टसाधनत्वात् । इत्थञ्च निषेधशास्त्रस्य संकोचो न स्यादिति भावः ।

135. विधिबोधोपगमे (ब. कृ.)

**स्यादिति साङ्ख्यमतमेव साधीय इति चेत् । स्यादेव अविरोधेऽपि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इत्यत्रैव सामान्यविधेर्विशेषेतरपरत्वं व्युत्पत्तिसिद्धमिति मा हिंस्यादित्यत्र संकोचः।**

**अथवा कथञ्चिद्बाधकापनयसंभवे नौत्सर्गिकार्थपरित्याग इति हिंसानिषेधसंकोचेनैवोपपत्तौ न श्वेतं छागमालभेत इत्यादौ विधिप्रत्ययस्य बलवदनिष्टासाधनत्वार्थपरित्याग [136] इत्यप्याहुः ।**

विवरणम्

**सांख्यमतमेवेति** । हिंसासामान्यस्यैवानिष्टसाधनत्वेन यागीयहिंसाया अपि अनिष्टसाधनत्वमस्त्येव । अत एव कर्मफलानुभवावसरेऽपि इन्द्रादीनां रावणमहिषासुरादिभ्यः दुःखानुभवोऽप्युपपद्यते इति सांख्यसिद्धान्तः ।

संकोचः — मा हिंस्यादित्यत्र धातोः रागप्राप्तहिंसायां लक्षणा ।

ननु यदि सामान्यविशेषभावः संकोचप्रयोजकः तदा ब्राह्मणेभ्यो दधि दीयतां तक्रमपि कौण्डिन्यायेत्यादावपि ब्राह्मणपदे संकोचः स्यादित्यत आह — **अथ वेति** ।

कथञ्चित् — निषेधशास्त्रस्य संकोचादिना । बाधकापनयसंभवे — शास्त्रविरोधाभावोपपादने संभवति ।

हिंसानिषेधसंकोचः — हिंसानिषेधशास्त्रस्य हिंसाविशेषे अनिष्टसाधनत्वबोधकत्वम् ।

बलवदनिष्टासाधनत्वार्थपरित्यागः — तादृशासाधनत्वाबोधकत्वम् ।

136. इत्यर्थः (ब. कृ.)

**अथ यागपाकादिजन्यश्रमादावपि कदाचित् कस्य चित् बलवद्द्वेषोदयात् यजेत, पचेत इत्यादावप्रामाण्यप्रसङ्गो दुर्वारः ।**

**यत्तु बलवदनिष्टासाधनत्वं न लौकिकविध्यर्थः, किन्तु न कलञ्जमित्यादिश्रुतेः प्रामाण्योपपत्तये वैदिकलिङ एव तदर्थकता । तत्रापि बलवदनिष्टं नरकमेव ताद्रूप्येणार्थः । अतः इष्टोत्पत्तिनान्तरीयकश्रमादेः कदा चित् द्वेषविषयतया न यागादौ विध्यर्थबाध इति ।**

विवरणम्

लिङर्थे बलवदनिष्टाननुबन्धित्वं परिष्कर्तुं शङ्कते — **अथेति** ।

**बलवद्द्वेषोदयादिति** । प्राचीनकर्मवासनयेत्यादिः ।

**अप्रामाण्यप्रसङ्ग इति** । बलवद्द्वेषविषयाजनकत्वस्य धात्वर्थे बाधादिति भावः ।

वैदिकलिङामेव नरकासाधनत्वार्थकत्वमिति यजेतेत्यादीनामप्रामाण्यापत्तिं परिहरतां मतमुपन्यस्यति — **यत्त्विति** ।

ताद्रूप्येण — नरकत्वेन । अर्थः — असाधनत्वप्रतियोगिसाधनत्वविशेषणतया लिङ्पदशक्यः ।

**इष्टोत्पत्तिनान्तरीयकेति** । यदुत्पत्तिं विना इष्टोत्पत्तिर्न संभवति तदित्यर्थः । इष्टोत्पत्तिव्याप्येति फलितोऽर्थः ।

**न यागादौ विध्यर्थबाध इति** । नरकासाधनत्वस्य लिङर्थस्य यागे सत्त्वादिति भावः ।

**तदपि न । शाकं न भुञ्जीतेत्यादिवैद्यकवाक्यस्य[137] बलवद्-निष्टाजनकत्वनिषेधपरत्वं विना प्रामाण्यानुपपत्तेः ।**

**तत्रापि रोगाजनकत्वं विध्यर्थः तदभावो नञा बोध्यते इति चेत् । रिक्तायां न गच्छेत्, पुष्ये नोद्वहेत् इत्यादिज्योतिःशास्त्र-वचनस्य नैकः पर्वतमारोहेत् इत्यादिवाक्यस्य च का गतिः । तत्रापि**

विवरणम्

येन लौकिकवाक्येन नरकासाधनं निषिद्ध्यते तादृशनिषेधवाक्यानां प्रामाण्योपपत्तये लौकिकलिङामपि बलवदनिष्टाननुबन्धित्वबोधकत्वमावश्यकम् । तादृूप्येण तत्रापि नरकासाधनत्वस्यैव लिङर्थत्वे तदभावस्य नरकसाधनत्वस्य तत्र धात्वर्थे बाधादप्रामाण्यापत्तिरिति दूषयति — **तदपि नेति** ।

**प्रामाण्यानुपपत्तेरिति** । शाकभोजने तृप्त्यादिरूपेष्टसाधनत्वस्य सत्त्वेन तदभावस्य बाधेन बोधयितुमशक्यत्वादिति भावः ।

शङ्कते — **तत्रापीति** । शाकं न भुञ्जीतेत्यत्रापीत्यर्थः ।

**का गतिरिति** । रिक्तायां तिथौ प्रयाणस्य पुष्योद्वाहादेश्च नरक-साधनत्वे रोगसाधनत्वे च मानाभावात् नरकासाधनत्वस्य रोगाजनकत्वस्य वा लिङर्थस्याभावो न बोधयितुं शक्यते इति तादृशवाक्यानां प्रामाण्या-नुपपत्तिरित्यर्थः ।

137. वैद्यकवाक्ये (ब.)

**विशिष्य तत्तदनिष्टासाधनत्वस्य विधिप्रत्ययार्थत्वे शक्त्यानन्त्यप्रसङ्गो व्युत्पत्त्यनुपपत्तिः ।**

**अत्र वदन्ति — द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनानुगते एकैव विधिप्रत्ययस्य शक्तिः । उपलक्षणीभूतद्वेषविषयतावच्छेदकत्वं परित्यज्य नरकाद्यसाधनत्वं प्रतीयते ।**

विवरणम्

शक्त्यानन्त्यप्रसङ्गः — नरकासाधनत्वरोगासाधनत्वत्वादीनां शक्यतावच्छेदकानां नानात्वादिति भावः ।

**व्युत्पत्त्यनुपपत्तिः** — शक्तिग्रहानुपपत्तिः ।

कलञ्जभक्षणादौ नरकत्वेन नरकसाधनताज्ञानमेव निवर्तकमिति तादृशबोधसंपत्तये, लिङः नरकत्वाद्याश्रयासाधनत्वे शक्तिं स्वीकृत्य, नरकत्वादिभेदेन शक्तिभेदपरिहाराय नरकत्वरोगत्वादीनि उपलक्षणीभूतेन द्वेषविषयतावच्छेदकत्वेनानुगमय्य निष्कर्षमाह — **अत्र वदन्तीति** ।

तादृशाभावत्वेनानुगते इत्यनेन शक्यतावच्छेदकैक्यं प्रदर्शितम् । द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया नरकत्वादीनामनुगमकत्वोक्तेः फलं दर्शयति — **उपलक्षणीभूतेति** ।

परित्यज्य — अविषयीकृत्य ।

अत्र, विनापि कलञ्जभक्षणं अगम्यागमनादितो नरकोत्पत्तेः व्यतिरेकव्यभिचारान्न नरकत्वं कलञ्जभक्षणजन्यतावच्छेदकम् । किन्तु वैजात्यमेव । तस्मात् न कलञ्जं भक्षयेदिति वाक्यात् नरकत्वविशिष्टासाधनत्वाभावः नरकत्वविशिष्टसाधनत्वपर्यवसितः कलञ्जभक्षणे बोधयितुं न

**कुत्र चिन्नरकासाधनत्वं कुत्र चिद्रोगासाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् । प्रतियोगितायाः प्रकारतया भानात्**

विवरणम्

शक्यते । वैजात्यश्च कलञ्जभक्षणे नरकसाधनत्वबोधात्पूर्वमनुपस्थितं व्यभिचारास्फूर्तेरिति वैजात्यविशिष्टासाधनत्वाभावोऽपि न बोधयितुं शक्यते । परन्तु वस्तुतो नरकवृत्तिवैजात्यावच्छिन्ननिरूपितसाधनत्वाभावाभावः नरकत्वाश्रयसाधनत्वाभावाभावत्वेन कलञ्जभक्षणे बोध्यते इति सूचयितुं नरकत्वाद्याश्रयसाधनतेत्याद्यभिहितमिति बोध्यम् ।

ननु यजेतेत्यत्र रोगासाधनत्वबोधः स्यात् तस्यापि विधिप्रत्ययशक्यत्वादित्यत आह —**कुत्र चिदिति** । यजेत, न कलञ्जं भक्षयेदित्यादौ ।

कुत्र चित् — शाकं न भुञ्जीतेति वैद्यकवाक्ये ।

**नियामकमिति** । बुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वपटत्वादिनानाधर्मावच्छिन्नवाचकादपि तदादिपदात् कुत्र चित् घटत्वविशिष्टस्य अन्यादृशधर्मविशिष्टस्य च बोधः तात्पर्याधीनः । एवं लिङ्शक्यस्यापि रोगासाधनत्वस्य तात्पर्याभावान्न यजेतेत्यादितो बोधः । अपि तु तात्पर्यवशान्नरकासाधनत्वस्यैवेति भावः ।

ननु द्वेषविषयतावच्छेदकधर्माश्रयसाधनत्वाभावः लिङ्पदजन्यबोधविषयत्वेन भगवत्संकेतविषयः इति शक्तिग्रहे अभावप्रतियोगितावच्छेदककोटावुपलक्षणतया भानाभावात् कथं द्वेषविषयतावच्छेदकत्वमुपलक्षणतया भासते इत्याशङ्कां प्रतियोगिताप्रकारकाभावबुद्धौ प्रतियोगिकोटावुपलक्षणतया भानस्य जात्यवच्छिन्नप्रतियोगिताकोऽयमभावः इति प्रतीतौ जातित्वस्यैव संभवात् निरुक्तधर्माश्रयसाधनत्वनिष्ठप्रतियोगिताकाभावत्वेन शक्तिग्रहे अभावभानं स्वीकृत्य परिहरति — **प्रतियोगिताया इति** ।

**प्रतियोगितावच्छेदकघटकनरकत्वादौ द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया शक्तिग्रहे भानमविरुद्धम् ।**

**न च प्रमेयत्वादेरप्युपलक्षणतया भानमविरुद्धमिति प्रमेयत्वादेरुपलक्षणतया नरकत्वाद्यनुगमकत्वं कथं न स्वीक्रियते विनिगमकाभावादिति वाच्यम् । सुखाद्यसाधनत्वस्य विध्यर्थताविरहेण प्रमेयत्वादेः सुखत्वादिसाधारण्यं[138] नोक्तरूपस्येत्यस्यैव विनिगमकत्वात् । न च तात्पर्याभावात् सुखाद्यसाधनत्वाबोधकत्वोपपत्तौ**

विवरणम्

उक्तरूपस्य — द्वेषविषयतावच्छेदकत्वस्य ।

**विनिगमकत्वादिति** । तथा च प्रमेयत्वादेरुपलक्षणत्वे सुखासाधनत्वस्यापि लिङर्थतापत्तिरिति भावः ।

ननु सुखासाधनत्वस्य लिङर्थत्वमिष्टमेव । न चैतावता पचेत इत्यादौ सुखासाधनत्वबोधापत्तिः । द्वेषविषयतावच्छेदकत्वस्योपलक्षणत्वस्वीकारेऽपि यथा यजेतेत्यादौ रोगासाधनत्वस्याबोधः तात्पर्याभावात्, तथैव तात्पर्यस्य नियामकस्याभावादेव सुखासाधनत्वस्याबोधोपपत्तेरिति शङ्कते — **न चेति** ।

138. साधारण्येन (कृ॰)

विध्यर्थत्वेऽपि क्षतिविरह इति वाच्यम् । तस्य विध्यर्थत्वे[139] तत्तात्पर्येणाधुनिकानां न भुञ्जीतेत्यादिप्रयोगापत्तेः ॥

---

इति महामहोपाध्याय श्रीमद्गदाधरभट्टाचार्यविरचितः
लकारार्थविचारः समाप्तः । व्युत्पत्तिवादः समाप्तः ॥

---

विवरणम्

विध्यर्थत्वेऽपीत्यस्य सुखासाधनत्वस्येत्यादिः ।

तस्य — सुखासाधनत्वस्य ।

तत्तात्पर्येण — सुखासाधनत्वतात्पर्येण ।

**प्रयोगापत्तेरिति** । सुखसाधनत्वपर्यवसितस्य सुखासाधनत्वाभावस्य भोजने अबाधादिति भावः ।

ज्योतिष्टोमादौ पशुहिंसाजन्यपापेन नरकोत्पत्तिशङ्कया शिष्टानां तत्राप्रवृत्तिवारणाय बलवद्द्वेषविषयनरकासाधनत्वं अवश्यं यागे बोधनीयम् । इत्थञ्च यजेतेति वाक्यजन्यबोधाच्छिष्टानां प्रवृत्तिरुपपद्यते इत्यतोऽपि बलवदनिष्टाननुबन्धित्वस्य लिङर्थतास्वीकार आवश्यक इत्यपि वदन्ति ॥

अत्र "शप्प्रत्ययार्थश्च लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव

139. विध्यर्थत्वेन (ब. कृ.)

विवरणम्

कर्तरि शप् इत्यस्य शब्विधायकता इत्यादिना निरूपितः (६४७-पृ) इत्यादर्शः ।

विकरणानामनर्थकत्वात् शपः अर्थ एव नास्ति । कर्तरि शबित्यस्य कर्तृत्वार्थके सार्वधातुके परे धातूत्तरं शप् भवतीत्यर्थः । निरुक्तभट्टाचार्य-ग्रन्थेऽपि शपः अर्थः न निरूपित इति सुधीभिः विभावनीयम् ।

एवं नियतप्रवृत्तिफलके ऋतावुपेयात् इत्यादिनियमविधिवाक्ये, लिङा नरकाभावरूपेष्टसाधनत्वं सप्तम्यन्तार्थऋतुकालावच्छेद्यत्वान्विते धात्वर्थे स्वदारगमनादौ बोध्यते । ऋतुकालावच्छेद्यस्वदारगमनं नरकाभावसाधनमिति शाब्दबोधानन्तरम् तत्कालप्रत्यासन्नस्य स्वदारगमनाभावस्य नरकसाधनत्व-बोधः मानसः समुत्पद्यते । ततश्च तत्कालाभिगमने नियमेन प्रवर्तते इति तद्वाक्यं नियमविधिः भवति । न चैवं सति पूर्वं अहरहः सन्ध्यामुपासीत इत्यत्र लिङा नरकाभावसाधनत्वबोधस्योक्तत्वात् तत्रापि निरुक्तरीत्या नियतप्रवृत्तिरुपपद्यते इति तस्य नियमविधित्वं स्यादिति वाच्यम् । विना विधिं यत्र रागत एव क्रियायां प्रवृत्तिर्भवति, तत्र प्रवृत्तिनियमोपपादको विधिः नियमविधिः । यथा स्वदारगमनस्य विधिं विनापि प्राप्तत्वात् तत्र प्रवृत्तिनियमोपपादकः ऋतावुपेयादिति विधिः नियमविधिः । सन्ध्योपासनादौ प्रवृत्तिस्तु विधिं विना न प्राप्नोति प्रवृत्तिनियमोपपादकोऽपि सन्ध्यामुपासीत इति न नियमविधिः । अपित्वपूर्वविधिरेव ।

यत्तु अत्र प्रत्यवायहेतुत्वमभावश्चेति द्वयं लिङर्थः । धात्वर्थ-गमनस्य प्रतियोगितया, सप्तम्यन्तार्थऋतुकालावच्छेद्यत्वस्य च लिङर्थाभावे

विवरणम्

अन्वयः । व्युत्पत्तिवैचित्र्याच्च तत्रैव लिङर्थप्रत्यवायहेतुत्वस्यान्वयः । इत्थञ्च ऋतुकालावच्छेद्यस्वदारगमनाभावः प्रत्यवायहेतुरिति शाब्दबोध-वर्णनम् ।

तत्, व्युत्पत्तिवैचित्र्याश्रयणेन, इष्टसाधनत्वशक्तस्य लिङः इष्टत्वाना-क्रान्तप्रत्यवायसाधनत्वबोधकत्वकथनेन च नातीव रमणीयम् । नरकाभावस्य तु दुःखविशेषाभावरूपस्य इष्टत्वाक्रान्तत्वात् तत्साधनत्वार्थकत्ववर्णनं समञ्जसमेव ।

एवं अन्ययोगव्यवच्छेदफलके पञ्च पञ्चनखान् भुञ्जीत इति परिसंख्याविधौ, पञ्चपदं शशकादिपञ्चभिन्ने लाक्षणिकम् । धातुश्च विरोधिलक्षणया भोजनाभावपरः । नरकनिवृत्तिरूपेष्टसाधनत्वं लिङर्थः । तथा च शशकादिपञ्चभिन्नपञ्चनखभक्षणाभावः नरकाभावसाधनमिति शाब्दबोधः । धातोः पञ्चपदस्य च लाक्षणिकत्वादेव परिसंख्याविधिस्थले स्वार्थहान्यादिर्दोषः इति वदन्ति । निरुक्तशाब्दबोधानन्तरं शशकादि-भिन्नपञ्चनखभक्षणे नरकसाधनत्वस्य मानसबोधो जायते इति बोध्यम् ।

अत्र च पञ्चपदस्य शशकादिपञ्चभिन्ने लक्षणा । प्रत्यवायहेतुत्वं लिङर्थः । शशकादिपञ्चभिन्नपञ्चनखभक्षणं प्रत्यवायहेतुरिति शाब्दबोधः इति वर्णनं, इष्टसाधनत्वशक्तेन लिङा इष्टत्वानाक्रान्तप्रत्यवायसाधनत्व-बोधकत्वोपगमेन नातीव समञ्जसं भाति । तस्मात्पूर्वोपवर्णितशाब्दबोध एव रमणीयः इति शिवम् ॥

विवरणम्

चकास्ति चोलग्रामेषु विपुलो मण्डनं भुवः ।
शाहजीराजपुरमित्यभिधा यस्य विश्रुता ॥ १

कवेरजापयःपूरसंपर्कादतिपावनः ।
षड्दर्शनीपारदृश्वपण्डितोत्तंसमण्डितः ॥ २

तत्र सामसमाम्नायसमाम्नानपवित्रिते ।
कुले वेङ्कटरामाख्यः चकासामास भूसुरः ॥ ३

नित्यानुष्ठाननिरतः सामविद्याविशारदः ।
दरभङ्गामहाराजसंमानितबुधाग्रणीः ॥ ४

तस्यात्मजातः संजज्ञे सुब्रह्मण्याभिधो बुधः ।
आक्षपादे च काणादे तन्त्रे वैयासिके तथा ॥ ५

अकुण्ठिता मतिर्यस्य गुरुपादाब्जसेवया ।
अण्णामलैविश्वविद्यानिलये बुधभूषिते ॥ ६

प्रवक्ता न्यायतन्त्रस्य वैयासिकनयस्य च ।
आचार्यकरुणापाङ्गरङ्गभूर्विदुषां मुदे ॥ ७

लकारार्थविचारस्य कृत्वा विवरणं लघु ।
समर्पयति भक्त्या श्रीजगद्गुरुपदाब्जयोः ॥ ८

---

**इति पण्डितराजेन सुब्रह्मण्यशास्त्रिणा विरचितं**
**लकारार्थविचारविवरणं समाप्तम् ॥**

॥ शुभं भूयात् ॥

# शुद्धाशुद्धपत्रिका

| शुद्धम् | अशुद्धम् | पत्रसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| कर्तृत्वविषयक | कतृत्वविषयक | 16 | 13 |
| कर्तृत्वविशेषण | कर्तत्वविशेषण | 26 | 6 |
| धात्वर्थ | घात्वर्थ | 43 | 19 |
| तिङ्पद | तिड्पद | 54 | 1 |
| तिबादेरेवेति | तिबादेवेति | 57 | 11 |
| ग्रामागन्तृमल्लरूपत्वात् | ग्रामगन्तृमल्लरूपत्वात् | 70 | 6 |
| मल्लनिष्ठ | मल्लनिष्ट | 71 | 6 |
| मल्लान्तरनिष्ठ | मल्लान्तनिष्ठ | 73 | 18 |
| लाघवमभिधाय | लाघवमभिभाय | 80 | 16 |
| पाकानुपधायक | पाकानुपाधायक | 88 | 3 |
| मतभेदेऽपि | मतभेतेऽपि | 111 | 6 |
| प्रतियोग्युत्पत्तौ | प्रतियोग्युत्पत्ता | 111 | 7 |
| तदर्थत्व | र्तद्थत्व | 111 | 19 |
| अवान्तरकालः | अवान्तरकाल | 124 | 19 |
| संभवतीत्येतन्न | संभवतीत्यन्ने | 139 | 18 |
| घटत्वविशिष्ट | घटत्वशिष्ट | 157 | 10 |
| व्यापकता | व्याकता | 169 | 10 |
| साधनता | साधनात | 173 | 18 |
| प्रमाण | प्रामाण | 175 | 8 |
| तयोरधिकारता | तयोरेधिकारता | 198 | 1 |
| भिन्नायाः | भिन्नस्य | 210 | 6 |
| कल्पनीयमिति | कल्पर्नायगिति | 224 | 13 |
| न उत्तरं | न तद्वाक्यमुत्तरं | 229 | 6-7 |